मित्रं । न । दर्शतं ॥ मिमीहि । श्लोकं । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रं । उक्थ्यं ॥ वंदस्व । मा-
रुतं । गणं । त्वेषं । पनस्युं । अर्किणं । अस्मेइति । वृद्धाः । असन् । इह ॥१७॥ प्र । यत् । इत्था । पराऽवतः ।
शोचिः । न । मानं । अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कं । याथ । कं । ह । धूतयः ॥ स्थिरा । वः ।
संतु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे । युष्माकं । अस्तु । तविषी । पनीयसी । मा । मर्त्य-
स्य । मायिनः ॥ परा । ह । यत् । स्थिरं । हथ । नरः । वर्तयथ । गुरु । वि । याथन । वनिनः । पृथिव्याः ।
वि । आशाः । पर्वतानां ॥ नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्यां । रिशादसः । युष्माकं । अस्तु । त-
वीषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ प्र । वेपयंति । पर्वतान् । वि । विंचंति । वनस्पतीन् । प्रोइति ।
आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥१८॥ उपोइति । रथेषु । पृषतीः । अयुग्ध्वं । प्र-
ष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयंत । मानुषाः ॥ आ ।
वः । मक्षु । तनाय । कं । रुद्राः । अवः । वृणीमहे । गंत । नूनं । नः । अवसा । यथा । पुरा । इत्था ।
कण्वाय । बिभ्युषे ॥ युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तं ।

युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ असामि । हि । प्रऽयज्यवः । कण्वं । दद । प्रऽचेतसः । असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गंत । वृष्टिं । न । विऽद्युतः ॥ असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शवः । ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुं । न । सृजत । द्विषं ॥ १९ ॥ उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयंतः । त्वा । ईमहे । उप । प्र । यंतु । मरुतः । सुऽदानवः । इंद्र । प्राशूः । भव । सचा ॥ त्वां । इत् । हि । सहसः । पुत्र । मर्त्यः । उपऽब्रूते । धने । हिते । सुऽवीर्यं । मरुतः । आ । सुऽअश्व्यं । दधीत । यः । वः । आऽचके ॥ प्र । एतु । ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता । अच्छ । वीरं । नर्यं । पंक्तिऽराधसं । देवाः । यज्ञं । नयंतु । नः ॥ यः । वाघते । ददाति । सूनरं । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळां । सुऽवीरां । आ । यजामहे । सुऽप्रतूर्तिं । अनेहसं ॥ प्र । नूनं । ब्रह्मणः । पतिः । मंत्रं । वदति । उक्थ्यं । यस्मिन् । इंद्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥२०॥ तं । इत् । वोचेम । विदथेषु । शंऽभुवं । मंत्रं । देवाः । अनेहसं । इमां । च । वाचं । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ कः । देवऽयंतं । अश्नवत् । जनं । कः । वृक्तऽब-

हिंषं । प्रऽप्रं । दाश्वान् । पस्त्याभिः । अस्थित । अंतःऽवावंत् । क्षयं । दधे ॥ उप । क्षत्रं । पृंचीत । हंति । राजंभिः । भये । चित् । सुऽक्षितिं । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥ २१ ॥ इतिश्रीमहग्भाष्यमूलभूतऋक्संहितायाःपदपाठःसंपूर्णः ॥



श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ ॥ॐनारायणंनिखिलपूर्णगुणा
र्णमुच्चसूर्यामितद्युतिमशेषनिरस्तदोषं।सर्वेश्वरंगुरुमजेशनुतंप्रणम्यवक्ष्याम्यृगर्थमतितुष्टिकरंतदस्य॥ओमशे
षगुणाधारइतिनारायणोप्यसौ। पूर्णोभूतिवरोनंतसुखोयद्व्याहृतीरितः॥गुणैस्ततःप्रसवितावरणीयोगुणोन्न
तेः। भारतिज्ञानरूपत्वाद्भर्गोध्येयोखिलैर्जनैः। प्रेरकोशेषबुद्धीनांसगायत्र्यर्थईरितः ॥ ४ ॥ सपूर्णत्वात्पुमा
न्नामपौरुषेसूक्तईरितः। सएवाखिलवेदार्थःसर्वशास्त्रार्थएवच। सएवसर्वशब्दार्थइत्याहोपनिषत्परा।तावाएता
ऋचइतिविशेषेणाप्यृगर्थतां। योदेवानामितिश्रुत्यादेवनाम्नांविशेषतः। स्पष्टत्वात्तद्गतत्वेन ॥५॥ तत्राहाग्रेग्नि
नामकं।अग्रणीत्वंयदग्नित्वमित्यग्रेनामतद्भवेत्।एवमेवाहभगवान्निरुक्तिंबादरायणः। यथैवाग्न्यादयःशब्दाःप्र
वर्तंतेजनार्दने। तथानिरुक्तिंवक्ष्यामोज्ञानिनांज्ञानसिद्धये। इतितेन। ( अग्निमीळे ) अग्निशब्दोयमग्रएवा
भिपूज्यतां। अग्र्यत्वमग्रनेतृत्वमत्तिमंगागनेतृतां। आहृतंस्तौम्यशेषस्यपूर्वमेवहितंप्रभुं। ऋत्विङ्नियामकत्वे
नयज्ञानामृत्विजंसदा। द्योतनाद्विजयात्कांत्यास्तुत्याव्यवहृतेरपि। गत्यारत्याचदेवाख्यंहोतृसंस्थंविशेषतः। ॥३१७॥
अग्निसंस्थेनरूपेणयतोग्निर्होतृदेवता। इंद्रियाग्निषुचार्थानांयद्धोताहोतृनामकः। रतिधारकोत्तमत्वात्सरत्नधा

तमईरितः ॥१॥ ( अग्निःपूर्वेभिः ) सपूर्वैर्नूतनैर्नरैष्यैर्विज्ञानादृषिनामकैः । ईड्योदेवादिभिस्सर्वैस्सचदेवानि हानयेत् ॥ २॥ (अग्निनारयिं) तेनैवरयिमाप्नोतिवित्तंविद्याधनात्मकं । दिवसेदिवसेनित्यंपुष्टिमेवनहीनता । यशश्चपुत्रसंयुक्तंवीर्यवत्तममेववा ॥ ३ ॥ ( अग्नेयं ) यंयज्ञंपरितोभूत्वारक्षसित्वंसदैवच । विधिमार्गस्थितंदे वान्सएवाप्नोत्यसंशयं ॥ ४ ॥ ( अग्निर्होता ) सोखिलग्रहणप्रज्ञःसद्गुणैःसंततोखिलं । यमयत्यग्र्यकीर्तीनामु त्तमोविबुधैःसह । आगंताखिलभक्तानांपूजास्वीकारतत्परः ॥ ५ ॥ १ ॥ ( यदंग ) यजमानाययद्भद्रंकर्तुमि च्छसिसत्प्रिय । त्वच्चेष्टयैवकर्माणिवर्तयित्वातदीहनं । तवैवसत्यमंगानांरसयद्वह्निगोहरिः । अंगिराअंगिरः पुत्रोयतोग्निरभवत्क्वचित् ॥ ६ ॥ ( उपत्वा ) वस्तर्दिनमहोरात्रमभीष्टप्राणिनांसदा । अल्पाअपिवयंबुद्ध्यात्वा मुच्चगुणमीश्वरं । उपयाममनःकर्मवाग्भिस्त्वन्नमसंभराः ॥ ७ ॥ ( राजंतं ) देदीप्यमानंस्वेसद्मन्यध्वरेशंसदावृ धं । यथार्थज्ञानगोपंत्वामुपेमसि ॥ ८ ॥ ( सनः ) पितेवनः । सूपाश्रयोभवत्वंचयद्वदौरससूनवे । रक्षसंतत सौख्यायसम्यक्सत्त्वायवासदा ॥ ९ ॥ २ ॥ १ ॥ मुनिस्तुसर्वविद्यानांभगवान्पुरुषोत्तमः । विशेषतश्चवेदानांयो ब्रह्माणमितिश्रुतिः । ऋग्वेदादिकमस्यैवश्वसितंप्राहचापरा । वाचोबभूवुरुशतीर्हयग्रीवादितिस्फुटं । वचो

भागवतेप्यस्तिब्रह्मांडेपितथापरं । हयग्रीवादिमाविद्याःश्वसितत्वेननिःसृताः । ब्रह्मणास्वीकृतास्ताश्चरुद्रशेष
विपाअपि । दक्षाद्याःसनकाद्याश्चशक्राद्यामनवस्तथा । जगृहुस्तेचविश्वस्मिंश्चक्रुर्व्याप्तास्ततोखिलाः । उत्कंप
ञ्चपुराणेचकपिलोभगवानजः । प्रोवाचब्रह्मणेविद्याहृदिस्थोबादरायणः । ॐकारपूर्विकाविद्याःप्रेरयत्यखिले
ष्वपि । सदैवब्रह्मणेपूर्वमितिसात्वतसंहिता । सकृन्निगदमात्रेणगृहीतंब्रह्मणाखिलं । अंतर्गतस्यव्यासस्यप्रसा
दान्नित्यशक्तितः । तेनचानंतशक्तित्वाद्युगपत्समुदीरितं । प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माखिलस्यच । सुपर्णो
खिलवेदानांपंचरात्रस्यनागराट् । द्वितीयप्रतिपत्तृत्वान्मुनित्वेसंप्रकीर्तितौ । यःपश्यतिस्वयंवाक्यंसऋषिस्त
स्यकीर्तितः । अर्वाक्कुद्वादशावृत्तेरधीत्याप्यृषिरेवसः । यत्स्वयंप्रतिभातस्यसंशयार्थंगुरोर्वचः । सुपर्णादेर्विरिंच
स्यकेवलंधर्मकारणं । ऋचामृषिस्ततःशक्रोयजुषांसूर्यएवच । सोमःसाम्नांतृतीयास्तेप्रतिपत्तारईरिताः । अथ
र्वांगिरसामग्निरेकर्षिश्चाप्यथर्वणां । इत्युक्ताःसमुदायस्यसंत्यन्येचपृथक्पृथक् । एतज्ज्ञानाददृष्टस्यफलस्याप्तिः
स्फुटंभवेत् । द्रष्टॄणांतुचतुर्थानांज्ञानादप्यैहिकंभवेत् । तेचैकस्यापिबहवःस्युःसूक्तस्यर्चएववा । तस्यांतस्यामव
स्थायांतत्तत्प्राप्तिविशेषतः । तेषांवाक्यस्वरूपेणप्रार्थनादिषुपश्यति । विष्णुर्ब्रह्मासुपर्णोवातत्तद्योग्यार्थभेदतः । ॥३१८॥

सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणीचभारती।द्रष्टृत्वश्चसर्वविद्यानांव्याख्यातोब्रह्मणामरुत्। स्वभर्त्रनंतरंद्रष्टृत्वस्ते
भ्यस्तन्नोदिताहिरुक्ताः।स्तुवंतिहरिंनित्यंविद्याभिस्तेचसर्वशः। छंदस्त्वेनमुनित्वेनतासांस्मृतिरुदीरिता। स्म
र्तव्यास्तेचसर्वेपिमुनित्वेनपृथक्पृथक्। गायत्रीबृहतीचैवताःसर्वागरुडस्तथा।ब्रह्माण्यनुष्टुबिंद्राणीत्रिष्टुप्स्वाहे
तिचोच्यते।गायत्रीजगतीचैववारुणीरोहिणीतथा।अनुष्टुब्बृहतीचैवतारापङ्क्तिःशचीतथा। उष्णिक्सौरीज
गत्यश्चसर्वदेवस्त्रियोमताः।विराण्मित्रावरुणयोर्भार्येइतिचकीर्तिते।अतिछंदांसिसर्वाणिसर्वदेव्यःप्रकीर्तिताः।
विराडितिचनामासांतास्ताऊनाधि(दि)केष्वपि।निचृद्भुरिग्विराट्संज्ञाप्रस्तारेत्यादिनामच।बह्वीनामेकमाने
नत्वेकंनामचयुज्यते। सर्वाभिमानिताचैवतिसृणांतुयथाक्रमं। देवतासर्वविद्यानांस्वयंनारायणःप्रभुः। ऋतेत
त्रप्रसिद्धाश्चदेवताश्रीस्तथात्रच। ऋतेप्रसिद्धाब्रह्मैवततस्तेनक्रमेणच।पूर्वप्रसिद्धवर्जंतुशक्रांतादेवतामताः।
ब्रह्मवायूगिरौवींद्रशेषरुद्राश्चतत्स्त्रियः।शक्रकामौकामपुत्रमनुदक्षांगिरस्सुताः।तद्वच्छचीरतिःसूर्यसोमधर्मा
दितत्स्त्रियः।प्रधानमरुतोवारिपतिरग्निश्चमारुताः।निर्ऋतिःस्त्रियश्चसूर्यादेरश्विनावितरेतथा। अनंतकोटिश
तकदशार्धाद्यंशतःक्रमात्। ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि।मुक्तावपिक्रमोह्येषदेवताउदिताइमाः। इंद्रा

वराविशेषेणलिंगेनैवपृथक्पृथक् । देवतास्तत्रतत्रस्युरेषएवपरोविधिः । वेदादिवर्णपर्यंतैर्मूर्तयःकेशवस्यतु ।स
मासव्यासयोगेनवाच्यास्तात्पर्यतःपृथक् ।यथायोगंयथान्यायमन्यासामपिमूर्तयः । ऋक्संहितायांस्वाध्याये
निरुक्तेव्यासनिर्मिते ।प्रवृत्तेचैतदखिलमुक्तंहिप्रभुणास्वयं । सर्वेवेदाश्चनामानितावाएताऋचस्तथा । इंद्रंमि
त्रंवरुणमित्याद्यत्रचप्रमापरा ।देवतातारतम्यंचसर्वोत्कृष्टंचकेशवं ।ज्ञात्वैवमुच्यतेह्यस्मान्नान्यथातुकथंचन ।
इतिपैंगिश्रुतिश्चाहदृश्यतेत्रचसर्वशः । नतेमहित्वमित्यादिनेश्वरानेवकेवलान् ।गुणान्विष्णोःश्रुतिर्ह्याहनैव
दोषान्कथंचन । जातापरिबभूवेतिमर्यादांब्रह्मणोपिहि ।नैवरेमेबिभेद्ब्रह्मानासीदित्यादिकानपि । दोषान्रुद्रे
चतानेवनमिनंतीतिपूर्वकान् । यंकामयेतंतमुग्रंरुद्रायधनुरित्यपि । अस्यदेवस्यमाशिश्नदेवाअपिगुरित्यपि ।
घ्नञ्छिश्नदेवानित्याद्यादोषावहवईरिताः । ततोवितिष्ठेयोनिःसएतावत्यहमित्यपि ।अन्याश्रयत्वंदेव्याश्चकथि
तंबहुशोपिहि । तदाश्रयत्वमन्येषामपितत्रैवनिश्चयात् । ब्रह्मैवाग्रइतिह्युक्तारुद्रादीनांततोजनिः ।उक्ता
जातानिविश्वानिसपर्थभवदित्यपि । यस्यच्छायामृतंमृत्युरितिचादरतोब्रवीत्।अनंतादवरेशानातस्याःप्राण
स्ततश्चवाक् । तस्यारुद्रउमातस्मादिंद्रस्तस्यास्ततोपरे । सौपर्णश्रुतिरित्याहसप्तशाक्षितयइत्यपि । वायुरस्माउपा

मंथद्विश्वदेवायवायवे। विश्वैर्देवैःसइत्याद्याःप्रमाअत्रापराअपि । नारायणोऽदितिर्वायुर्वाणीरुद्रउमाविभुः । इतरेचक्रमाद्धीनाःशतांशाद्यायुतोवराः। इतिबर्कश्रुतिश्चाहशक्रात्सप्ताक्षितिश्रुतिः।अयंतएमितन्वेतिपूर्वा अन्याअपिस्फुटं।वायोराधिक्यमप्याहुरिंद्रंसोमंहुताशनं । सूर्यंरुद्रमिमान्पंचदेवानेकोमहात्मनः। सृजत्यत्ति महान्प्राणइतिचाहतुरश्रुतिः। विहिसोतोरसृक्षतनेंद्रंदेवममंसत । नयस्येंद्रइतिह्याहविष्णोरिंद्रस्यहीनतां।वे धाअजिन्वदित्यादिवचनंविष्णुनामतः। आनंदश्रुतिरप्यस्यजीवतामेवदर्शयेत् । आहसूर्यादपींद्रस्यवायो र्विष्णोरपीशतां। यःसूर्यंयउषसंम्रियंतेपंचदेवताः। चक्षुषाद्यौश्चादित्यश्चचक्षोःसूर्योअजायत। यमादित्योन वेदेतिपूर्वाश्रुतिरथापराः।विष्णोर्वातोअजनिष्टवातादिंद्रस्ततोरविः।सोमश्चेतिलयोप्येवंपूर्वेपूर्वेगुणाधिकाः। विष्णोःप्राणोअजनिष्टप्राणादिंद्रोरविर्विधुः। लयोप्येतादृशस्तेषांपूर्वःपूर्वोगुणाधिकः। तुरश्रुतिश्चसौपर्णीपिं गश्रुतिरपीदृशी। अतःसर्वाधिकोविष्णुर्निर्णीतःश्रुतिसंचयात् । अतोदोषवचोयत्रतद्वाक्यमवरंवदेत्। नि र्दोषतैवविष्णोस्तुक्रमान्मध्यगतेष्वपि। त्रयोर्थाःसर्ववेदेषुदशार्थाःसर्वभारते। विष्णोःसहस्रनामापिनिरंतरश तार्थकं। इतिस्कांदवचोयस्मादर्थभेदव्यपेक्षया। निर्दोषत्वंहरेर्वक्तिदोषमन्येष्वपिक्रमात्। तारतम्यस्यविज्ञप्त्यै

वचोदोषस्यचार्थवत्। गुणाःश्रुताइतिह्याहगुणैकनियतिंहरौ। निर्दोषगुणपूर्णश्चविष्णुरेकोनचापरः।अपूर्णा
दोषरहितामायैकातद्वशैवच। अदोषःप्रायशोब्रह्मादोषवंतःक्रमात्परे। इतिमान्यश्रुतिश्चाहभेदोर्थानांततोम
तः। रूढिमेवसमाश्रित्यविभज्यार्थान्यथाक्रमं। विदोषगुणपूर्त्यर्थंविष्णौयोगार्थमानयेत्। पश्चादेवयथायोग
मितरेष्वपिसंनयेत्। ऋग्वेदसंहितायांचप्रभुणैवंसमीरितं। पृथग्रूपाणिविष्णोस्तुदेवतांतरगाणिच। अग्न्यादि
सूक्तवाच्यानिनाम्नासूक्तभिदाभवेत्॥ ५॥ नकिर्मांकिःस्मसीत्यादिप्रोक्ताधिक्यविवक्षया। आधिक्येधिक
मित्येवहरिणासूत्रमीरितं।कृत्वीहत्वीतिपूर्वाश्चतृतीयोतिशयेयतः।विश्लिष्टार्थेचविश्लिष्टमूनार्थेचोनमिष्यते।
व्यत्ययोऽभेदकरणस्वातंत्र्येषुसमीरितः।अभेदोहरिरूपाणांगुणानांचक्रियासुच। तस्यैवावयवानांचभेदःश्री
ब्रह्मपूर्वकैः। मुक्तैरपिजडैर्भेदःकैमुत्यादेवदृश्यते। ऋग्वेदसंहितायांचप्रोक्तमेतत्समस्तशः॥ अभेदःस्वगुणा
द्यैश्चमुक्तानामपिसर्वशः। भेदाभेदस्वभेदश्चगुणैःसंसारिणामपि। जडानामंशतोभेदःसमुदायेनचोभयं।
मनुष्यगंधर्वपितृगणकार्मिकतात्विकाः। देवाःशक्रःशिवोब्रह्मामुक्तौसौख्यादिभिर्गुणैः।शतायुतोत्तरानित्य ॥ ३२०॥
मन्योन्यप्रीतिसंयुताः। इतिसिद्धांतगंवाक्यंस्वयंभगवतेरितं। स्वाध्यायस्तत्त्वविज्ञानंविष्णुभक्तिर्विरागता।

निषिद्धकर्मसंत्यागोविहितस्यसदाक्रिया । सदाविष्णुस्मृतिश्चैवकेवलंमोक्षसाधनं । एतैर्विनानमोक्षःस्याद्ध
वेदेतैरपिध्रुवं । ऋषिच्छंदोदैवतानिज्ञात्वार्थंचैवभक्तितः। स्वाध्यायेनैवमोक्षःस्याद्विरक्तस्यहरिस्मृतेः।जप्येनै
वतुसंसिद्ध्येद्ब्राह्मणोनात्रसंशयः। कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते। तस्मान्नित्यंहरिंध्यायन्कुर्यात्स्वा
ध्यायमंजसा । ऐहिकामुष्मिकाभोगारक्तस्यान्यस्तुमुच्यते । इतिस्वाध्यायवचनंस्वयंभगवतोदितं । स्वा
ध्यायात्तुप्रवचनेसहस्रगुणितंफलं । अर्थद्रष्टुःकोटिगुणंततोनंतंनियामके । तर्कागमाभ्यांनियतिंयःकरोत्यधि
कंततः। पूर्णवेदाखिलद्रष्टुर्ब्रह्मणःफलमुच्यते। दार्ढ्यमेवानुदात्तार्थंउदात्तस्योच्चतार्थता । नीचतास्वरितस्या
र्थःप्रचयस्ययथास्थितिः। समाहारेखिलाअर्थाःस्वरार्थानामियंस्थितिः। स्तुत्यधर्मस्यभेदेनपदाद्यादिस्वरेभि
दा। साधारणोविधिस्त्वेषविशेषोयत्रयत्रच । क्रमादेवतदन्येषामृष्यादीनांस्वयोग्यतः । विपर्ययार्थकथनेवि
परीतंतथातमः। यावत्प्रयोजकोज्ञानेतावत्तावच्छुभाधिकः। तथैवविपरीतेपिस्मृतोज्ञानेचतत्समं । तमोनि
रयमानुष्यस्वर्गमोक्षातिरेकतः । योग्यतातारतम्येनफलंसर्वेषुचोच्यते। इतिप्रवृत्तवचनंविवेकेप्येतदीरितं।
यादृशोयोग्यतांयायात्सज्ञेयोर्थस्तथास्फुटं। अनंतनियमैर्युक्ताअनंतार्थविशेषिणः । वेदाइतिसमासेननिय

 

मोयंसमीरितः । ऋक्संहितागतंवाक्यमितिचान्यन्नियामकं । तस्माद्वंद्याश्चपूज्याश्चब्रह्माद्याज्ञानयोजकाः । गुरुत्वेनक्रमादेवविशेषेणैवकेशवः । आरभ्यस्वगुरुंयावद्विष्णुरेवोत्तरोत्तराः । क्रमान्निष्फलतान्यत्रगुरुतत्त्वेस मीरिता ॥ ७ ॥ एवंस्थितेग्निगंविष्णुमग्निनामानमेवच । मधुच्छंदाऋक्शतेनवाय्वादिगतमेवच । साम्या दिंस्तौतिसद्भक्त्यातत्तन्नामानमेवच ॥ ७ ॥ ( वायवायाहि ) बलत्वादयनाच्चैववायुरित्यभिधीयते । वा त्यायुरितिवाज्ञानाद्धरणादाश्रयत्वतः । वयबंधनइत्यस्मात्संसारादेर्व्ययादपि । व्येत्यस्मिन्नितिवावायुर्वयश्रे ष्ठत्वइत्यपि । मुख्यतोवासुदेवेतेगुणाःसंत्येवसर्वशः । अनिषिद्धास्तदन्येषुयथायोग्यतयामताः । दर्शतस्तत द्दष्टित्वात्सर्वज्ञोसौयतोविभुः । भक्त्याह्यलंकृताःसोमामनांस्यन्येहिरण्यतः । हिरण्यालंकृतायस्माद्भूयंतेवा यवेसुताः । तान्पाहिश्रुधिचाह्वानंस्वातंत्र्येव्यत्ययोप्ययं । मनोपिभोग्यमीशस्यप्रीतिमात्रेणकेवलं । गुणा धिक्यंयेनभवेद्वेदस्यार्थःसएवहि । प्रयोजकत्वान्नान्यस्यफलाभावात्तदर्थता । उपक्रमादयोयत्रतात्पर्यार्थस्स एवहि ॥ १ ॥ ( वायउक्थेभिः ) स्तुवंतिशास्त्रैःस्तोतारोयथावद्यज्ञवेदिनः ॥ २ ॥ ( वायोतव ) वाक्त्वत्सं पर्किणीयज्ञकृतेप्रापयतीप्सितं । सोमपायातिमहतीमहार्थत्वात्त्वदर्थतः ॥ ३ ॥( इंद्रवायू ) इंद्रःसपरमैश्वर्या

दिदमुद्दिश्यचद्रुतेः । ददर्शेदंदीप्तिमत्त्वाददिदंरातीतिवाभवेत् । सोमाभिमानिनोदेवावामिच्छंतिहिसोमगाः ।
प्रियैरुपागतंतेनोपेंद्रःसंकर्षणोहरिः । द्विरूपत्वाद्दहुत्वंचविशेषादेवकेवलं । एकस्यैवहरेर्नात्रभेदःशंक्यःक
थंचन । एकमेवाद्वितीयंतन्नेहनानास्तिकिंचन । मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति । यथोदकंदुर्गे
वृष्टंपर्वतेषुविधावति । एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावति । उक्त्वाधर्मान्पृथक्त्वस्यनिषेधादेवमेवहि । वि
शेषोज्ञायतेश्रुत्याभेदादन्यश्चसाक्षितः ॥ ४ ॥( वायविंद्रश्चचेतथः ) विजानतःसुतानन्नपतौसूर्येसदास्थितौ ।
द्रवद्रुतंसुतात्पर्यद्योतकोभ्यासइष्यते ॥ ५ ॥ ३ ॥ ( वायविंद्रश्चसुन्वतः ) यजन्सुन्वन्कृतस्यानुसारिकर्मैवनि
ष्कृतं । तदर्थंक्षिप्रमायातंधियेत्थंभूतयाऽचलौ।नरौतावविनाशित्वादुपचारःक्वचिद्भवेत् । अमरत्ववद्यतोमो
क्षोदेवतानांसुनिश्चितः ॥ ६ ॥ ( मित्रंहुवे ) मित्वात्रातीतिमित्रोयंमितमह्नाकरोतिवा । मितंरातीतिवानि
त्यंमितंरमयतीतिवा । आवृणोतीतिवरुणस्तमसाऽज्ञानतोपिवा । वरमुन्नयतीत्यस्माद्वरानंदत्वतोपिवा । पू
तादक्षाअनेनेतिपूतदक्षइतीरितः। तमाह्वयामिसुखिनंशमदन्नमतेयतः।अनूनसुखभोक्तृत्वाद्रिशादाइतिकी
र्तितः।हरिर्घृतःसुशुद्धत्वाद्घृताचीचतदंचनात् । स्वधीतिसाधकोविष्णुर्भक्तानांचयथार्थतः ॥ ७ ॥ ( ऋतेन )

नित्यवृद्धःसभगवानृतेनानुपचारतः । ऋतस्पृग्वेदवाच्यत्वादन्यौचेद्भगवानृतः । ऋगतावित्यतःसर्ववस्तुष्वनु
गतत्वतः । तेनवृद्धौतत्स्पृशौचसर्वदामित्रवारिपौ । संहितायांतुदैर्घ्यादिरुक्ताधिक्येपदेन्यथा । अनन्यार्थ
त्वविज्ञस्याईशार्थेचमहाक्रतुं । महत्सुखंवा ॥ ८ ॥ ( कवीनः ) तुविजौब्रह्मजातौतथाविधौ । हरिस्तथैवभूत
त्वात्स्थानंक्षयइहोच्यते । कर्मापसंचकर्तारंदक्षंकर्तारमेववा । अस्मदर्थेदधातेतौनित्यंबुद्धौगतागतौ ॥ ९ ॥
॥ ४ ॥ २ ॥ ( अश्विनायज्वरीः ) अन्नानियज्ञयोग्यानिक्षिप्रहस्तौशुभाधिपौ । बहुगोपौबहुभुजौनोयोयजत
मश्विनौ । यज्ञेवृतान्स्वभागान्वासंयोजयतमाशुवै । आशुवानाद्रतेरश्वीक्षिप्रावगतितोथवा ।अश्नुतेखिलमि
त्येवाप्यश्वजत्वात्तथाश्विनौ ॥ १ ॥ ( अश्विनापुरुदंससा ) बहुकर्मकृतौसौख्यवीर्यात्मिक्याधियागिरः । अ
स्मदीयाःसंभजतंधिष्ण्यौसर्वाश्रयौसदा ॥ २ ॥ ( दस्रा ) भेदकौसर्वशत्रूणांदस्रौसंबंधिनौहिवां । सुतायुवाक
वःसोमायज्वनःस्तृतबर्हिषः । नासत्यौनासिकासंस्थौनैवचासद्गुणौक्कचित् । रुजांद्रावणतोरुद्रोवायुस्तदनुव
र्तनात् । स्नेहतोनुवशत्वाद्वातन्मार्गगतितोथवा। कस्मिन्वहमितिश्रुत्यावासुदेवोश्विनावपि।रुद्रवर्तनिशब्दो ॥३२२॥
क्ताः ॥ ३ ॥ ( इंद्रायाहिचित्रभानो ) चित्रंभद्रंरतंचितौ । चिद्रतेश्चायनीयत्वाददनाद्वाचितोभिदा । तादृशा

रश्मयोज्ञानमस्येतिभगवान्परः।चित्रभानुरितिप्रोक्तस्तेजोवाताद्दशंप्रभोः।त्वदिच्छवइमेसोमाःपटीभिःसूक्ष्म
तंतुभिः । विस्तृत्यशोधिताःसूक्ष्मप्रमाभिर्वामनांसिच । सोमानांमनसांचैवदेवताःसोमरश्मिगाः । सोमभृ
त्याःसमस्तस्यसोमएवाधिपोहरिः ॥ ४ ॥ (इंद्रायाहिधियेषितः) अस्मद्बुद्ध्याप्रार्थितोवास्वबुद्ध्याप्रेरितोपिवा।
ब्राह्मणैःप्रेरितोभक्त्यावदतोहोतुरंजसा । ब्रह्माणिसोमयुक्तानियजमानस्यवेच्छतः । उपायाह्यपियःकोपिसा
धकोयज्ञकृन्मतः । मानसोवाचिकोवास्याद्यज्ञोहोताह्वयन्सच ॥ ५ ॥ ( इंद्रायाहितूतुजानः ) वेगवांस्तूतुजा
नःस्यात्संसारमुपसंहरन् । वर्ततेयेनहरिवाहरिभिर्वर्ततेथवा । हरणाद्विषयाणांचप्राणाहरयईरिताः।तेषुवर्त
तइत्यस्मात्तान्वाथगमयेदसौ । हरिवाहरिवान्वापिविष्णुनावर्ततेथवा । चनोमनइहप्रोक्तंसुखंचक्कचिदीर्यते।
॥६॥ ५॥ ( ओमासः ) आसमंतात्स्वीकृतामाओमाइतिचशब्दिताः । ओनामाभगवान्विष्णुस्तेनवानि
र्मिताःसुराः । ओतामानेषुमावैषुप्रोताओमाइतीरिताः। प्रजाश्चर्षणयःप्रोक्ताविश्वेतेचप्रवेशनात्।सर्वेवाथवि
शांवानाच्छब्दःकस्मैयथाभवेत्। दातारोयजमानावापि ॥७॥ ( विश्वेदेवासोअप्तुरः ) अप्तुरःकर्मवेगिनः। उ
स्रास्तुरश्मयश्चैवस्वसराणिदिनानिच ॥ ८॥ ( विश्वेदेवासोअस्रिधः ) असंसारादस्रिधस्तेदेवाश्चेन्मोक्षनिश्च

 

यात् । यथेष्टनिश्चितज्ञानाएहिमायाःसमंततः । अदुःखत्वादद्भुहस्तेमेधंयज्ञंजुषंतुनः ॥ वह्नयोवहनादस्य॥९॥
(पावकानः) शोधकत्वात्तुपावका । सरणात्सर्वगत्वेनसर्वज्ञोवासरोहरिः । सरसःसरतित्वाद्वातद्वत्येवसर
स्वती । हरौगुणाःसरश्शब्दादेवीतुहरिवाचिनी । हरिप्रियत्वतोवायुःसरस्वांस्तत्प्रियाथवा । गुणस्वेनततत्वा
द्वाभगवांस्तुसरस्वती । स्त्रीरूपश्चैवपुंरूपोभगवान्ननपुंसकः । स्त्रीपुंदोषविहीनत्वादपितच्छब्दगोचरः । अ
न्नेनोवाजिनामीशोवाजिनीसूर्यउच्यते । वाजीनच्छंदसांवापिस्वामीप्रोक्तःसवाजिनी । छंदांस्यश्वायतस्त
स्यतेचेनाअन्यवाजिना । अन्नवत्त्वाद्वाजिनीवाग्ज्ञानयुद्धत्वतोपिवा । सपुत्रोवागुमातस्याःपुत्रीतद्वाजिनी
वती । सरस्वतीहरिर्वापियज्ञंवहतुनोशनैः । अन्नदाहिसदादेवीधियासहवसेद्यतः । धियावसुर्नित्यबोधा
॥ १० ॥ (चोदयित्री) सुवाचांप्रेरकासदा । सुबुद्धिज्ञापिकासैवस्वातंत्र्याल्लक्ष्मयोभवेत् । अनेनैवप्रकारेण
सैवयज्ञादिधारिणी ॥ ११ ॥ (महोअर्णः) महोअर्णःपरंब्रह्मतेजस्त्वाच्चमहत्त्वतः । अरमानंदरूपत्वाण्णो
हिनिर्वृतिवाचकः । तज्ज्ञापयतिसादेवीज्ञानंदत्वामहत्तरं । महोअर्णःस्वयंदेवःस्वमात्मानंप्रकाशयेत् । विरा ॥३२३॥
जयतिविश्वाश्चधियःसुज्ञानदानतः ॥ १२ ॥ ६ ॥ ३ ॥ १ ॥ सूक्तंत्वनारतंप्रोक्तमनुवागेककालिका । अ

न्यथात्वंचतत्रस्यादावापोद्वापतस्त्वृचां। वेदानंतत्वविज्ञस्यैतौचक्रेबादरायणः । ऋचःसऋचउद्धृत्यऋग्वेदंकृ
तवान्प्रभुः। यजूंषिनिगदांश्चैवतथासामानिसामतः । एवंपुराणवचनादुद्धृताहिततस्ततः । ऋचःशाखात्व
मापन्नाःशिष्यतच्छिष्यकैरिमाः । मानस्तेनेतिपूर्वासुद्व्यूनतादृश्यतेर्थतः । शुनःशेपोदिताभ्यश्चपठ्यंतेन्यत्र
काश्चन । अत्राप्यक्रमतोदृष्टिरितिनैकक्रमोभवेत् । अनंतत्वात्तुवेदानांप्रायःकर्मानुसारतः । संक्षेपंकृतवा
न्देवःशिष्याश्चतदनुज्ञया। अष्टकाध्यायवर्गादिभेदंचकृतवान्प्रभुः।स्वाध्यायविश्रमार्थायतस्माक्रमविपर्ययः।
तत्रतत्रैवांतरितादृश्यंतेचखिलाअपि।यत्रार्थेनविशेषोस्तिपदांतरिततात्रच। यत्राल्पोपिविशेषोस्तिपदंनांत
रितंभवेत्॥ ७॥ ( सुरूपकृत्नुं ) विष्णुंसुरूपकर्तारमभिप्रेतार्थसिद्धये।त्राणायवाकामधेनुमिवदोहायतत्स्थि
तेः। दिनेदिनेस्वाह्वयामो ॥ १ ॥ ( उपनः ) ज्ञानदोस्यैवचाधिकं। ज्ञानाख्यरयियुक्तस्यहिरण्यादिमतोपि
वा। सुखकारीभवां ॥ २ ॥ ( अथाते ) स्तस्मालभेमसुमतीस्तव । अंतेमितास्त्वद्धिषयामतयोह्युत्तमोत्तमाः ।
अस्मानतीत्यमापश्यकरुणार्द्रदृशासदा ॥ ३ ॥ ( परेहि ) मन्मनोवाथशक्रोवादूरेपिपरमेश्वरं।गच्छाग्राह्यमन
ष्टंचव्याप्तचित्तंयएवच। सखिभ्यउत्तमोनित्यं॥ ४ ॥ (उतब्रुवंतु ) निदस्तस्यसमीपगाः । तेपिब्रुवंतुनोदेवंप्रापु

यैंचान्यतोपितं । निर्गत्याज्ञानतस्त्वस्माद्दधानाईशएवच । दुवःप्राणान्ब्रुवंस्त्वेवतेपिनःपरमेश्वरं ॥ ५॥ ७॥ (उ
तनः) अरयोपिप्रजाअस्मान्वोचेयुःसुभगान्सदा । शत्रुभेदिंस्त्वेंद्रस्यस्यामैवानुग्रहेसुखे॥ ६ ॥ (एमाशुं)आ
शुवीर्यतवैवाशुंसोमंक्षिप्रंमनोपिवा । आभरस्वोदरेतुष्ट्याहृदिवायज्ञभूषणं। ईमेवपुंमदकरंमदादुत्पतनादिके।
हेतुंमंदत्वहेतुंचतत्सखीनांपुरोगतेः ॥ ७ ॥ (अस्यपीत्वा) एनंपीत्वाबहुज्ञानाभूस्तमोभिरनावृतः । प्रसादा
देवमुक्तेषुतमोसह्यतयाघनः।आवृतेरेववृत्राणिह्यज्ञानान्यन्नदंनरं । प्रावोयुद्धेषुयोद्धारंभक्तंज्ञानिनमेवच॥८॥
(तंत्वा) योधयामोवयंतंत्वांज्ञानादिधनलब्धये । अज्ञानाद्यस्मदरिभि ॥ ९ ॥ ( योरायः ) योंशेषद्रविणाव
निः । सुखदःसंसृतेःपारस्तस्माइंद्रायगायत । कंपोशेषग्रहेक्कापिलज्जायांवापुरातने । पृथक्त्वेधृष्यतायांवाहरि
णक्संहितोदितः ॥ १० ॥ ८ ॥ ४ ॥ (आत्वेता ॥ ० ॥ १ ॥ पुरूतमं) सुपूर्णानांपूर्णतमंवरेण्यानामधीश्वरं ।
सुतेसोमेसुखेनैवसचागायततंप्रभुं ॥ २॥ (सघ) मुक्तौयोगायासमंताद्भवेन्नोघोवधारणे । सएवभगवान्ज्ञा
नवित्तायसचबुद्धिगः । बुद्धिःपुराश्रयत्वेनपुरंधिःपत्यथापिवा । पत्यर्थत्वेतुतादर्थ्यंसोन्नैःसहनआव्रजेत्॥३॥
(यस्यसंस्थे) यस्यस्थितौनवृणतेहर्यग्रमपिशत्रवः ।मनःपुरोवाविषयहरणान्मनएवच ।बुद्धिश्चहरिशब्दोक्तेत

मआदीनिशत्रवः ॥ ४ ॥ ( सुतपाव्ने ) सोमपेशुचयःसोमाःप्राप्यैदधिविमिश्रिताः । मनांसिध्यानयुक्तानिवा
यांतिहरयेसदा ॥ ५ ॥ ९ ॥ ( त्वंसुतस्य ) सदापूर्णःशुभज्ञानज्यैष्ठ्यव्यक्त्यैसुताप्तये । नक्षुदादेरभिव्यक्तोभवो
॥ ६ ॥ ( आत्वा ) गीर्भिर्वृतप्रभो । प्रकृष्टचेतास्त्वद्भृत्योयोस्मैस्युःशंकराःसुताः ॥ ७ ॥ ( त्वांस्तोमाः ) व्यंज
यंत्यधिकंस्तोमाःसाध्युक्थान्यृक्षुचैवहि । महागुणैर्व्यंजयंतुगिरोस्माकमपिप्रभो । आकाशवृद्धिवद्वृद्धिर्विष्णोः
स्यान्नैवचान्यथा । नवर्धतेनोकनीयानितिह्येनंश्रुतिर्जगौ । महातात्पर्यरोधाच्चश्रुत्यर्थोनापरोभवेत् । यद्यन्या
पेक्षयावृद्धिरीशत्वंस्यात्कुतोस्यच । अक्षितोतिरितिह्यस्मात्पूर्णाभिप्रायतोदिता ॥ ८ ॥ ( अक्षितोतिः ) अनं
तफलदंवाजमस्मत्तोलभतांसच । ददातुवापौरुषाणिशक्तयोयत्रचाखिलाः । अतश्चानंतशक्तित्वान्नवृद्ध्याद्याः
कथंचन । सर्वोपेतेत्येतमर्थमभिप्रेत्याहवेदराट् ॥ ९ ॥ ( मानो ) मामर्तानस्तनूनांतुद्रोग्धारःस्युःकथंचन । ई
शोस्यपाकुरुवधंतेननोमुक्तिदानतः । मानुषेभ्यस्तनूनांचनैवनःस्युर्विपत्तयः । कालेनदैवतःप्राप्तःस्याददेहत्व
तोवधः ॥ १० ॥ १० ॥ ५ ॥ ( युंजंति ) पौंस्यानिवासुदेवस्यब्रध्नंवृद्धंदिवाकरं । अरुणंचरंतंपरितोगिरीन्युंजं
तिसर्वदा । तैरेवान्यानिचंद्रादिरोचनानित्रिविष्टपे । रोचयंति ॥ १ ॥ ( युंजंत्यस्य ) हरीचास्यमनोबुद्धीस्वश

क्तयः। युंजंत्यधिगुणत्वेनकाम्यावश्वावथापिवा। विशिष्टपक्षसंयुक्ताविवक्षिप्रतरौसदा। रथेदेहेपिवादेवाःस्व
मनोबुद्धिमेवच। अस्यदेहेप्रयुंजंतिसूर्यादीन्स्थापयंतिच। सूर्यादिस्थापकत्वंचब्रह्मादीनांभवेत्सदा। शोणौ
चशमणौप्रोक्तौसुखप्राप्तौयतस्सदा। श्यामौमूर्धनिशोणौचशक्राश्वावग्रगौस्मृतौ। धृष्टौनॄन्प्रतितंवेशंवहंतौता
वुभावपि ॥ २ ॥ (केतुं) अज्ञायकुर्वन्सज्ज्ञानंहेमाहेमायचेश्वर। उषद्भिःसंप्रकाशद्भिःशक्तिभिर्व्यक्ततामगाः।
मर्यामरणवंतोपिदेवाएवं ॥ ३ ॥ (आदह) हरेर्वशात्। तदेवसुखमन्वेवपुनर्गूढत्वमापिरे। स्वेच्छयैवपरेशस्य
शक्तयोदेवताअपि। यज्ञेवाच्यंदधानाश्चनाम ॥ ४ ॥ (वीळुचित्) वीळुदृढंह्यपि। आरुजद्भिःस्वसामर्थ्यैर्गु
हायांसंस्थितोपिसन्। वहद्भिरखिलंलोकंप्रकाशत्वानिलब्धवान्। देवैर्वैताहृशैःसाकमानुकूल्येनलब्धवान्॥
॥ ५ ॥ ११ ॥ (देवयंतः) सम्यक्प्रद्योतयंतोमुंमतिरूपंयथास्थितं। विदद्भित्तंमहांतंचविश्रुतंस्वुगिरोस्तुवन्
॥ ६ ॥ (इंद्रेण) तस्यसंदर्शनायैवसंगतस्तेनशंकरः। मखात्मापुरुहूतोवाश्रीभूमीचसुखात्मिके ॥ ७ ॥ (अ
नवद्यैः) अनवद्यैर्महाज्ञानैःप्रियैर्देवगणैःसह। वायुनाचसहार्चंतिसुधीत्वात्परमेश्वरं ॥ ८ ॥ (अतः) अतोहे
तीरिहायाहिदिवोवासूर्यमंडलात्। परिज्मन्सर्वगास्माकमधिकृत्यसमर्हणं। अस्मिन्गिरःप्राप्नुवंतिसम्यक्पर

ममुख्यतः।युंजंतीत्यत्रबाहुल्याद्देवयंतोतइत्यपि।बाहुल्यादृ(दृ)ष्टितोगीर्भिर्विनार्थोनान्यइष्यते।९।(इतोवा) इतोदिवोवापातालात्सातिलाभस्वरूपिणं। महतोरंजकाद्धिष्णोर्लोकाद्धातमधीमहे ॥ १० ॥१२॥६॥ ( इंद्रमित् ) तमेवगाथिनःसाम्नास्तुवंत्यृग्भिश्चबह्वृचाः। बृहंतमन्यवाणीभिरपि॥१॥(इंद्रइत् )हर्योर्विमिश्रितः।रथेथवामनोबुद्ध्योर्वाङ्मात्रेणैवयोगिनोः। सचासुखेनवज्रीचज्ञानानंदोहिधातुतः।हितश्चरमणीयश्चहिरण्ययइतीरितः ॥२॥ (इंद्रोदीर्घाय )दीर्घकालंदर्शनायसूर्यमारोहयद्दिवि । ज्ञानैरादरयोग्यंचप्राणात्मानंसमैरयत्॥३॥(इंद्रवाजेषु)बहुभिर्युध्यमानेषुयुद्धेष्वपिसदाऽवनः। दुष्टोग्रैःसदभिप्रायैः ॥ ४ ॥ ( इंद्रंवयं ) महदल्पधनार्थिनः।हवामहेरिवर्जंतंतमसांप्रतियोगिनं॥ ५ ॥१३॥( सनः ) अस्मदीयंचरुंभोज्यमानंदंतमपावृणु।मोक्षगंसर्वदातस्त्वमप्रतिद्वंद्वनोवृषन्॥६॥( तुंजे ) त्वयैवप्रेरणेजातेतत्रतत्रयउत्तराः। तेपिस्तोमाःसुष्टुतित्वमस्यानंत्यान्नचाप्नुयुः॥ ७ ॥ ( वृषा) प्रतिवीरोवृषावंसस्तद्वंतावंसगोविभीः।यूथान्याकर्षतियथाप्रजाःप्रेरयतिप्रभुः। अल्पस्यापिप्रसिद्ध्यैवदृष्टांतत्वंतुयुज्यते॥ ८ ॥ ( यएकः )राजाभवतिवित्तानांप्रजानांचैकएवयः।देवगंधर्वदैतेयपितृमानुषभेदतः। प्रजानामपिपंचानांसामान्याच्चविशेषतः ॥ ९ ॥(इंद्रंवो)

॥ १० ॥ सम्यग्घवामहेसर्वंगतंचव्यक्तरूपतः। स्थातुमेकत्रवोर्थायजनानोस्तुसकेवलः ॥ १० ॥ १४ ॥ ७ ॥ २ ॥
(एंद्र) जयिनासहितंलाभयुक्तंवित्तंसदाबलं। वर्षिष्ठंसुमहद्रक्षानिमित्तंनित्यदाभर ॥ १ ॥ (नियेन) येनारी
न्मुष्टियुद्धेनतमांसिज्ञानयुद्धतः। त्वत्प्रेरितानिरुंधामःकांश्चिद्धातुरगादिभिः। आवृत्त्यैवोपसर्गस्यक्रियावृत्ति
र्भविष्यति॥ २॥ (इंद्रत्वोतासः) त्वत्प्रेरिताज्ञानरतिंदृढत्वेनाददीमहि ॥ ३ ॥ (वयंशूरेभिः) त्वयापृतन्यतः
शत्रूनभिष्यामसुयोद्धृभिः ॥४॥ (महाँइंद्रः) यस्मान्महाननादिश्चविष्णुर्जीवोऽवरस्तथा। तस्यैवास्तुमहत्त्वंत
न्नजीवब्रह्मतांस्मरेत्। आकाशवत्प्रथिम्नासौशवःसुखबलेतथा ॥५ ॥ १५ ॥ (समोहे) अन्यसंवहनेनापिये
तंप्राप्ताजनार्दनं। ज्ञानलाभेनतुनरस्तएवपशवोपरे। विप्राश्चैवधियायुक्तामूर्खाःशूद्रसमामताः ॥ ६ ॥ (यः
कुक्षिः) यःकुक्षिस्तस्यदेवस्यसमुद्रइवसोखिलान्।कामान्क्षरतिभक्तायमहापइवतर्पकाः। काकुदस्तस्यजिह्वा
स्तुबह्व्योबहुमुखेषुयाः ॥ ७ ॥ (एवाह्यस्य) एवमेवास्यवाणीचवेदेतामहतीतथा।पक्वाशाखेवयजतेवरदात्री
विरप्शिनः। बलिष्ठस्यहिते ॥ ८ ॥ (एवाहिते) संतिसद्योपियजतेहिते।मावतेज्ञानिनेनित्यमूतयश्चविभूतयः ॥ ३२६॥
॥ ९ ॥ (एवाह्यस्य) स्तोमाउक्थानिचैवास्यतस्मैकाम्यानिसर्वदा। गेयाःशंस्यानिसोमस्यपीतयेनान्यथा

पिबेत् ॥ १० ॥ १६ ॥ ८ ॥ ( इंद्रेहि ) सोमपाःसोमपर्वाणःसर्वंयस्मात्तदिच्छया । अभिष्टिरोजसानित्यंमदंसु
खमवाप्स्यसि ॥ १ ॥ ( एमेनं ) एनमासृजतेंदौचविष्णुंतंमदकारिणं । मंदिनेविष्णवेसम्यक्कर्मिणंसर्वकर्मिणे
॥ २ ॥ ( मत्स्व ) स्वानंदविश्वजीवेशमत्स्वास्मद्रक्षयासह ॥ ३ ॥ ( असृग्रं ) त्वन्निस्सृतावेदवाचस्त्वांप्रत्येवाप्य
नारतं । उच्चैर्मुख्यतयासम्यग्विसृष्टाःस्वपतिंप्रति । अजोषाःस्तुत्यरूपेणत्वत्सेव्यास्त्वदृतेक्कचित् ॥ ४ ॥ ( संचो
दय ) अर्वाञ्चीचान्प्रतित्वस्मान्भद्रंराधःप्रचोदय । अस्त्येवतेविशेषेणप्रकृष्टंशुभमच्युतं ॥ ५ ॥ १७ ॥ ( अस्मान्
रभस्वतःशब्दवतःस्तोतृनस्मान्यशस्वतः । तत्रत्वयिमहारायेमहाकीर्तेसुचोदय ॥ ६ ॥ ( संगोमत् ) अस्मास्व
तिबृहज्ज्ञानंनित्यंसंधेहिचाक्षयं ॥ ७ ॥ ( अस्मे ) विद्यांकीर्तिंसदेहान्नंबहुलाभयुतंबृहत् । प्रार्थनेपौनरुक्त्यंन
चोदयेतिततःपुनः ॥ ८ ॥ ( वसोः ) वसोर्वसूनांचपतिंदेवदेवेश्वरंप्रभुं । ऋज्ञेयमाह्वयामोत्रगृणंतोभीष्टसिद्ध
ये ॥ ९ ॥ ( सुते ) अविनाश्यरिरुद्दिष्टोबृहच्छ्रूषंसुखंप्रति । सुतेसुतेसद्भृहायदेवायबृहतेर्चति ॥ १० ॥ १८ ॥ ९ ॥
( गायंति ) गायंतिसामगास्त्वामृग्भिःशंसंत्यृग्वेदिनोतिकं । विरिंचास्त्वांबहुज्ञानशक्रकेतुमिवोच्छ्रितं । व्यजानन्
॥ १ ॥ ( यत्सानोः ) उच्चतोप्युच्चंसामर्थ्यंकरणेतव । ततोपिभूरियत्तेनचेतत्यर्थमतोभवान् । मुक्तामुक्तसमूहेनशोभ

तेगूढशक्तिमान्।उच्चादुच्चंविरिंचादिगतंकर्तृत्वमेवयत्।भूरिस्पष्टमभूत्तेनपरेशस्यततश्चसः। चेतत्यर्थानशेषां
श्चमहायूथेनचेष्टते॥ २ ॥ ( युक्ष्वाहि ) कक्ष्याभिपूरकौपुष्ट्यायुंक्ष्वत्वंकेशिनौहरी।अथोपगम्यशृणुनोगिरः
॥३॥ ( एहि ) अभिस्वरवस्तुतिं। प्रशंसांकुरुशब्दंचपुनर्हर्षान्महत्तरं। ब्रह्मयज्ञंचनोंतस्थोबहिष्ठश्चैववर्धय॥४॥
( उक्थं ) नित्यवृद्धत्वतोविष्णोर्वर्धनंतुप्रकाशनं। बहुशत्रून्निषिध्यसौहरिर्दनुजघातकः। अस्मत्सख्यायशब्दं
चचकारास्मासुसंस्थितः। यथासुतेषुसोमेषुकरोत्यृत्विक्षुचस्थितः॥५॥ ( तमित् ) तमेवशरणंनित्यंसखित्वा
द्यर्थमीमहे। शक्त्यानंदस्वरूपत्वाच्छक्रःसर्वत्रचाशकत्। अस्माकंचसदावित्तंददेवप्रवर्तते ॥ ६ ॥ १९ ॥
( सुविवृतं ) विस्पष्टंसुष्ठुकाल्यंचयशस्त्वद्दत्तमेवहि । गूढंज्ञानसमूहंत्वंविवृण्वृद्धिंचनःकुरु ॥ अद्रिरादरणीय
त्वात्प्राणस्तद्धर्तकोद्रिवाः। हरिःशक्रस्तथाद्रीणांछेदनाद्दारणादपि॥ ७ ॥ ( नहित्वा ) नत्वामृघायमाणंहिव
र्धमानंतुरोदसी। संप्राप्तुतःश्रीभूमीचसहितेवाऽप्रसादतः। अपःप्रजाःसुखवतीरजयस्त्वद्धशत्वतः । ज्ञानानि
संधूनुहिचप्रापयोच्चाअपिस्वयं॥ ८ ॥ ( आश्रुत ) बहुश्रवणकर्णास्मदाह्वानंशृणुचादरात्। अद्यैवचगिरोधे
हिमयिस्तोमंचमत्कृतं। प्रियंयोगादपिकुरु॥ ९ ॥ ( विद्माहि ) विद्मत्वांशक्तिमत्तमं। श्रोतारंयुत्सुचाह्वान

माह्वयामस्तवावनं। बहुलाभोत्तममिति ॥ १० ॥ स्थानांतरगतेऋचौ । दृष्टेंद्रंयज्ञगंयाभ्यांमधुच्छंदाःसमस्तु वत्। आतूनइतितेनैवनविरुद्धाशतर्चिता ॥ ७॥ (आतूनः) मात्राकुशैर्गृहीतत्वाज्जन्मन्यासीत्सकौशिकः। गाधित्वाद्वाहिरण्यांडकोशस्थत्वाद्धरिस्तथा। मंदसानोनित्यसुखीस्तुत्यमायुश्चनस्तिर। ऋषिंसहस्रलाभंमांकु रुच ॥ ११ ॥ (परित्वा) त्वाइमागिरः । सर्वदापरितःसंतुमदीयाःसर्वलाभिनं । वृद्धिरूपागिरोजुष्टाःसेवारू पाश्चसंतुनः ॥ १२ ॥ २० ॥ १० ॥ अष्टावृचःपुनस्तेनदृष्टाअन्यत्रगास्तपः । कुर्वता ॥ ७ ॥ ( इंद्रंविश्वा ) स म्यगुद्रिक्तगुणव्यक्तिस्तथाभिधः ॥ १ ॥ ( सख्येते ॥ २ ॥ पूर्वीरिंद्रस्य ) प्रथमानिमहत्त्वेनतेदानान्यवनानि च। नभिद्यंतेननश्यंतिगोमदन्नंयशस्तथा। यदिमंहतेददातीशः ॥ ३ ॥ (पुरांभिंदुः ॥ ४ ॥ त्वंवलस्य) व लस्तिर्यग्गतिर्धियः। वाचामन्यार्थबुद्धेस्तुबिलंमूलंतमोहियत्। तदपावृतवांस्त्वंचप्रदर्श्यविनिवार्यच। त्वांहिदे वाभयापेताःप्रेर्यमाणास्त्वयैवच। छाद्यमानंगिरादैत्यैररक्षन्निवसद्गिरा॥ ७॥ इंद्रस्यगोसवार्थेचसमुत्सृष्टाजग त्यपि। चतुंगावोहृतादैत्यैःसरमारक्षिताःपुरा। तस्याःस्वसृत्वमुक्त्वैवतयोच्छिष्टंचगोपयः। तदर्थंपणयोनाम तेदैत्याबलपूर्वकाः। इंद्रेणनिहताःपश्चाज्ज्ञात्वाचसरमाकृतं । ताडयित्वापदावक्रात्सृतेपयसितांभयात्। श

रणागतांप्रेषयित्वादूत्येनपणिनांपुनः । भित्वागिरिव्रजंतंचगावोयत्रप्रतिष्ठिताः । निःसारिताःपुनस्ताश्चगो
सर्वेनेष्टमेवच । तदादेवाअभीत्यैवपरितोजुगुपुःपतिं ॥ ५ ॥ ( तवाहं ) तवदानैरहंसिंधुंनदींप्रत्यागमंपुनः।
त्वामावदन्स्तुतिपदैर्यज्ञदीक्षार्थमुद्यताः । उपातिष्ठंतकर्तारोविदुस्त्वांयेगिरोदित ॥ ६ ॥ ( मायाभिः ) श
क्तिभिःशक्तिमंतंत्वांशोषकंवृत्रमातिरः । तमोवात्वांविदुर्मेधारतास्तेषांश्रवांसिच । विद्याउच्चैस्तरांदेहि
॥ ७ ॥ ( इंद्रमीशानं ) स्तुवंतित्वांसहौजसा ॥ ८ ॥ २१ ॥ ११ ॥ ३ ॥ ७ ॥ ऋक्संहितायाःस्वाध्या
यात्प्रबंधाद्यासनिर्मितात् । ब्राह्मणेभ्यस्तथामानात्प्रोक्ताःस्युर्मुनयोत्रये । श्रुत्यभावादलिंगाच्चमुनिर्नान्यः
प्रतीयते । श्रुतिलिंगान्यतायावत्तावत्पूर्वाप्रमाभवेत् ॥ ७ ॥ शतर्ग्भिरुत्तराभिस्तुवह्निनामानमच्युतं । अ
स्तौन्मेधातिथिस्ताभ्यउत्तराअपितद्दृशः । अन्यत्रगास्तपस्यन्सतादद्दर्शकदाचन । कालस्थानांतरत्वंचेत्सं
ख्यातोभ्यधिकंभवेत्। अन्यस्थानगताअन्यदृष्टाअप्यत्रगायदि। संख्यांतर्भावमेष्यंतिताइतोपगतायतः॥७
( अग्निंदूतं ) यज्ञभागार्थमत्रस्थोदेवैःसंप्रेषितोयतः। दूतोग्निर्वासुदेवश्चतत्तत्प्रार्थितकृद्यतः। विश्ववेदाःससर्व
ज्ञोयज्ञज्ञोयज्ञसुक्रतुः॥१॥(अग्निमग्निं) अग्निनामाजामदग्न्योभगवान्संप्रकीर्तितः । तस्यरूपबहुत्वेनवीप्साचै

वोपपद्यते। हवीमभिर्ऋंगाह्वानैराह्वयंतःप्रजापतिं ॥ २ ॥ (अग्नेदेवान्) जज्ञानोव्यज्यमानस्तुवृक्तंप्रस्तुतमु
च्यते। यजमानोवृक्तबर्हिः ॥ ३ ॥ (तान्) बोधयेशोच्छतःसुरान्। देवैःसहोपविशसि ॥ ४ ॥ (घृताहवन)
यस्यतेसुघृतंहविः। रिषतोनाशकान्रक्षोजनान्प्रतिदहेवच ॥ ५ ॥ (अग्निनाग्निः) यस्यास्येहूयतेसोग्निःपरे
शेनसमिध्यते। अथवाऽऽहवनीयोग्निर्मथितेनसमिध्यते ॥ ६ ॥ २२ ॥ (कविमग्निं) सत्यधर्मासद्गुणभृद्दुःख
घ्नोऽमीवचातनः। चातनंकालनंवास्यात् ॥ ७ ॥ (यस्त्वामग्ने ॥ ८ ॥ योअग्निं) देववीतिस्तुतद्गतिः। आवास
यतियस्त्वांचतंत्वंमृळयसर्वदा ॥ ९ ॥ (सनःपावक) त्वत्पूजाविषयेदेवानावहेंद्रियमानिनः ॥ १० ॥
(सनस्तवानः) गायत्रेणस्तूयमानोदृश्यमानेननोरयिं। पुत्रयुक्तामिषंचैववीर्ययुक्तामथावह ॥ ११ ॥ (अ
ग्नेशुक्रेण) ज्वलतातेजसाविश्वदेवाह्वानैर्वृणुस्तुतिं ॥ १२ ॥ २३ ॥ १२ ॥ (सुसमिद्धः) अस्मद्धविष्मतेदे
वानाहूययजचादरात् ॥ १ ॥ (मधुमंतं) तनूभ्योवाक्ततोदेवोव्यक्तस्तेनतनूनपात् ॥ २ ॥ (नराशंसं)
नरैःस्तुत्योनराशंसोवह्निरन्याथवातनूः ॥ ३ ॥ (अग्नेसुखतमे) मनूनांचहितत्वेनमनुर्हितइतीरितः ॥४॥
(स्तृणीत) आनुषक्सर्वतोदेवस्थानंबर्हिःस्तृणीतच। शुद्धस्यविष्णोर्यत्स्थानंघृतपृष्ठंहितन्मनः। यत्रस्या

द्दर्शनंविष्णोर्नित्यामरणधर्मिणः ॥ ५॥ (विश्रयंतां) ऋतरूपेणहरिणासमृद्धायाऋतावृधः । द्वारोदेव्यःश्रि
योदास्यःश्रयंतामिहनोमखे । मानसेबाह्ययज्ञेवाह्यसंगत्वादसश्चतः । अद्याहनितथानूनमद्यैवयजनार्थतः।
द्वारभूतःसभगवानपिसाक्षान्मुमुक्षतः। स्त्रीरूपश्चसः ॥ ६ ॥ २४ ॥ ( नक्तोषासा ) नक्तास्यान्नाक्तोयस्मा
त्ससर्वतः । उषाःप्रकाशरूपत्वात्सुभद्रेतेउपह्वये । अस्मिन्बर्हिषिसंस्थित्यै ॥ ७ ॥ ( तासुजिह्वा । होतारौदे
वगावपि । मथ्यमानोपरश्चैववह्नीतद्वोथवाहरिः । आत्मांतरात्मरूपेणद्विरूपोवाव्यवस्थितः । देवेषुयजतांय
ज्ञमस्मदीयमिमंसदा ॥ ८ ॥ ( इळा ) इळेज्यत्वाद्धरिःश्रीर्वाभूरूपासैवचापरा। महीतुभारतीनामवायव्या
ब्रह्मणोपरा । तद्वतस्ताद्दृशैरूपैःपृथक्स्थोवाहरिस्तथा ॥ ९ ॥ ( इहत्वष्टारं ) त्वष्टातेजस्त्वतोविष्णुर्वलत्वाद्वा
समीरितः । विश्वरूपकरत्वाच्चविश्वरूपोथपूर्तितः ॥ १ ॥ ( अवसृजा ) वननीयपतित्वेनवनस्पतिरिती
रितः । ज्ञानंतुचेतनं ॥ ११ ॥ ( स्वाहा ) स्वाहास्वभागगतिमान्स्मृतः । अव्ययत्वादमोघश्च ॥ १२ ॥
॥ २५ ॥ १३ ॥ ( ऐभिरग्ने ) कामदोहादुवःस्मृताः ॥ १ ॥ ( आत्वा ॥ २ ॥ इंद्रवायू ) बृहन्पतिर्बृहत्वावा
वाचएवबृहस्पतिः । मित्रेतिमित्रावरुणौपूषानामसपोषणात् । पूर्णत्वाद्वाभगःप्रोक्तःपूर्णैश्वर्यादिकत्वतः ।

आदिस्थत्वात्सआदित्यआददानःप्रयातिवा । बहुरूपत्वतश्चैवमानोक्तत्वात्तुमारुतः ॥ ३ ॥ ( प्रवः ) मत्सरामदकारित्वात्ताच्छील्यादुत्तरंपदं । द्रप्सास्तेद्रवणाच्चैवचमसस्थाश्चमूषदः । शिरश्चचमसंप्रोक्तमिष्टदानात्तथेंदवः ॥ ४ ॥ ( ईळतेत्वां ) अवस्युर्यजमानःस्यादवनार्थप्रवृत्तितः । आत्मस्थंवाबहुवचोबहवोमुनयोत्रवा । उत्तराणांवचस्त्वेनस्वयंवदतिचेश्वरः । अरंकृतोतिकर्तारस्त्वलंकर्तारएववा ॥ ५ ॥ ( घृतपृष्ठाः ) स्निग्धपृष्ठास्समारूढाहरिणावाविदोषिणा । मनोमात्रेणयोज्याश्चत्वांदेवांश्चवहंतिये ॥ ६ ॥ २६ ॥ ( तान्यजत्रान् ) तैर्देवान्यजतःस्तोतृन्ज्ञातेनब्रह्मणैधितान् । पत्नीभिर्योजयागंतुंसहमध्वश्चपायय ॥ ७ ॥ ( येयजत्राः ) तेषष्ठ्यतोनुदात्तःस्यादुदात्तोबहुवाचकः । आवृत्तस्तुभवेदर्थस्तेपिबंतुवषट्कृतौ ॥ ८ ॥ ( आकींसूर्यस्य ) सूर्यस्यरोचनात्स्वर्गादावक्षत्यग्निरिंदुपान् । उषःप्रकाशनाद्ब्रह्मतद्विदस्तउषर्बुधः ॥ ९ ॥ ( विश्वेभिः ) देवास्तेविष्णुधामत्वान्मित्रधामानईरिताः ॥ १० ॥ ( त्वंहोताः ॥ ११ ॥ युक्ष्व ) अग्निवाहाअश्वतर्योदूर्वापद्माग्निसप्रभाः । लोहिताःक्वचिदश्वाश्चरोहिन्मृग्योपिकुत्रचित् ॥ १२ ॥ २७ ॥ १४ ॥ ( इंद्रसोमं ॥ मरुतः ॥ अभियज्ञं ) ऋतुर्मार्गस्तुनेतृत्वान्नेष्टाग्निर्हरिरेववा । ईष्टेनकश्चिदस्येतिग्नानद्यश्चसमीरिताः । गतिशीलत्वतोग्नास्ताज्ञातृनेतृत्व

तोहरिः। गमनान्नयनाद्वाग्नाऋतुपात्रमृतुस्तथा। सोमास्तदोकसःप्रोक्ताऋतुपात्रस्थितायतः। पत्नीनेतृत्वतो
नेष्टानेष्टर्त्विक्संप्रकीर्तितः।ज्ञापयंतिस्वलिंगानीत्यृतवःषट्प्रकीर्तिताः।पावनाच्चैवपोतारोमरुतःपोतृदेवताः।
अग्निस्तुदेवतानेष्टुस्त्वष्टेंद्रोविष्णुरेववा ॥ १ ॥ २ ॥ ३ ॥ ( अग्नेदेवान् ) वेद्युत्तरासदश्चैवप्राग्वंशोयोनयःस्मृ
ताः। भूषभूषयनोयज्ञं ॥ ४ ॥ ( ब्राह्मणात् ) ब्राह्मणाच्छंसिपात्रतः। पिबेंद्रनोराधसोर्थेत्वामनुत्वृतुदेवताः।
स्तृतंछिन्नमितिप्रोक्त ॥ ५ ॥ ( युवंदक्षं ) मस्तभ्यंदुर्दभंस्मृतं। दक्षाख्यंयजमानंचापीशाथेयज्ञमेवच। सो
मंपीत्वर्तुपात्रेणसहवातेनचर्तुना ॥ ६ ॥ २८ ॥ ( द्रविणोदाः ) होताचहोतृकाश्चैवद्रविणोदाद्रवीणसः। अ
ग्निश्चैवाग्नयस्तेषांदेवताविष्णुमीळते ॥ ७ ॥ ( द्रविणोदाददातु ॥ ८ ॥ द्रविणोदाःपिपीषति ) पातुमिच्छति
सोमंससोमास्तस्मैप्रतिष्ठिताः। ऋतुपात्रैर्देवताभिःसहैवैनमभीप्सत ॥ ९ ॥ ( यत्त्वा ) चतुर्थवारमपियत्त्वांय
जामोददिर्भव ॥ १० ॥ ( अश्विना ) दीद्यग्नीइतिदीप्ताग्नी ॥ ११ ॥ ( गार्हपत्येन ) संत्योभिःसंततत्वतः।
विष्णुर्वर्त्वधिपोविष्णुःकेशवादिस्वरूपतः।ग्रहान्सोमस्यमिमतइतितस्यैवकथ्यते। गार्हपत्येनपात्रेणयजमा
नस्तुदेवयन्। देवान्पातीति ॥ १२ ॥ २९ ॥ १५ ॥ ( आत्वा ) सुष्टूरीकुर्वंतिविषयान्यतः। चक्षूंषींद्रस्यहरय

स्तेनोक्ताःसूरचक्षसः ॥ १ ॥ ( इमाः ) भक्तिस्तुतानिधानानिबुद्धेर्धानाइतिह्यपि ॥ २॥ (इंद्रं ) प्रातरित्या
दिवाक्येनसवनत्रयमीरितं । समाप्तत्वात्सोमपीतिस्तृतीयंसवनंस्मृतं । सदा ॥ ३ ॥ ( उपनः ॥ ४ ॥ सेमं
॥ ५ ॥ ३० ॥ इमेसोमासः ) विष्णुविवक्षायांयजमानबलंसहः । तदिष्टस्यैवदानायतद्गुणव्यक्तिरेववा । पूर्ण
मदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते।हेयोपादेयरहितगुणपूर्णोहरिःसदा।अनुग्रहव्यक्तिरेवतद्गुणानांचनान्यथा ।
इत्यादिवेदवाक्येभ्योनैववृद्धिर्हरेःक्वचित् ॥ ६ ॥ ( अयंते ॥ ७ ॥ विश्वमित् ॥ ८ ॥ सेमं ) पृणसंपूरय
स्वाध्यःसुधीतयइतीरिताः ॥ ९ ॥ ३१ ॥ १६ ॥ ( इंद्रावरुणयोः ) अविकारेणसंस्थानमीदृक्त्वंनामकीर्ति
तं ॥ १ ॥ ( गंतारा ) मावतोज्ञानयुक्तस्यप्रजाश्चर्षणयःस्मृताः ॥ २ ॥ ( अनुकामं ) नेदिष्ठत्वंसमीपत्वं
क्षिप्रंशरणमीमहे ॥३॥ (युवाकु) युवयोरेववाक्यानांसुमतीनांचसर्वशः। भवेमान्नप्रदातृणांसर्वदाविषयावयं
॥ ४ ॥ ( इंद्रः ) क्रतुःप्रधानउक्थ्यश्चशस्त्रैःस्तुत्योविशेषतः ॥ ५ ॥ ३२ ॥ ( तयोरित् ) रक्षणेनतयो
र्वित्तंज्ञानंवाप्राप्नुमःसदा । निधीमहिचदानंचस्यादेवास्माकमर्थिने ॥ ६ ॥ ( इंद्रावरुणा ) हस्वतासंहि
तायांतुदेवतैक्यप्रदर्शिनी । स्वरूपैक्यंहरौतत्तुमत्यैक्यंभिन्नयोरपि ॥ ७ ॥ (इंद्रावरुणनु ) अद्यवांनुनुमोलो

पः स्वातंत्र्यार्थेहिसूत्रतः। साधयंतीषुधीष्वेवशर्मास्मभ्यंप्रयच्छतं ॥ ८ ॥ ( प्रवा ) यथास्थितस्तुतिंयांचवर्ध येथेसदैवमे ॥ ९ ॥ ३३॥१७॥४॥( सोमानं) सौम्यंशब्दंकृणुत्वंनोविष्णोवायोसुवाक्पते । कक्षीवंतंप्रतिहियो दत्तोयःसउशिक्सुतः। विवक्षितोमुनिःसोपितस्मादर्थोपिमांप्रति ॥ १ ॥ ( योरेवान् ) वित्तवान्रोगहाज्ञानवे त्तास्माभिःसयुग्भवेत्। तुरोवेगाद्धरिर्वायुः॥ २ ॥ (मानः) अररुट्चातिरोषणात् । तस्यधूर्तिर्वचोनास्मान्पू रयेद्रक्षनोहरे ॥३॥( सघ ) घेतिहावधृतिश्चैवसोमःसौम्यत्वतोहरिः । उनामयाचयुक्तत्वादूमैर्युक्तत्वतोपि वा । अमःसइतिवा ॥ ४ ॥ ( त्वंतं ) साक्षाच्छ्रीर्दक्षेणेतिदक्षिणा । दक्षिणाचतुरत्वाद्वास्वयमेवजनार्दनः ॥ ५ ॥ ३४ ॥( सदसस्पतिं ) सदसस्पतिर्हरिःसाक्षाद्वायुरग्निरथापिवा। लाभज्ञानस्वरूपोसौशरणंतमयासि षं ॥ ६ ॥ ( यस्मात् ) धीप्रेरकःसध्येयश्चधीभिर्योगंतदाप्नुते ॥ ७ ॥ ( आत्) तस्माद्धविष्कृतस्त्वृद्धिंकरो तियजतोविभुः। करोतिचोत्तमंयज्ञंदेवाह्वानानिगच्छति ॥ ८ ॥ ( नराशंसं ) नरैःस्तुत्योनराशंसोहरिर्धृष्ट तमश्रसः । गुणानांप्रथिमाधिक्यात्सप्रथस्तमईरितः । यस्यस्वर्गादपिगृहंमखःप्रियमिवेयते ॥ ९ ॥ ३५ ॥ ॥२३१॥
॥१८॥ ( प्रतित्यं ) यज्ञंप्रतिप्रतित्यंतंसम्यक्शास्त्रोक्तलक्षणं ।आहूयसे ॥ १ ॥ ( नहि ) महान्नैवत्वदन्यो

स्तिकर्तुंप्रति । विष्णोर्हिमुख्यतोर्थोयमगौकांश्चिद्दतेसुरान् ॥ २ ॥ (येमह) महतोरंजकात्स्वर्गाद्द्रोग्धा
रोखिलंविदुः ॥ ३ ॥ ( यउग्राः ) प्राप्ताअर्कंविशेषेणसन्निधिस्तत्रयद्धरेः ॥ ४ ॥ ( येशुभ्राः ) शुद्धाघोर
बलाःक्षेत्रत्रातारःक्षतितोपिवा । रम्यसत्सुखभोक्तारोमरुतोमारुतत्वतः । एतादृशानिरूपाणिप्राणान्निस्था
निचेशितुः । पृथग्वातादृशान्येवदेवगान्यपिसर्वशः ॥५॥३६॥ ( येनाकस्य ) स्वर्गोपरिप्रकाशेचसूर्यादा
वासतेसुराः । नाकोनिर्दुःखरूपत्वाद्द्यौःप्रकाशस्वरूपतः ॥ ६ ॥ ( यईंखयंति ) प्रतोलयंतिचगिरींस्तिर
स्कृत्यचसागरं । पुरुषान्प्रकृतिंवापिपर्ववंतोहिजन्मना । पुरुषाःसुसमुद्रेकात्समुद्रःप्रकृतिर्मता । प्रकृतेःपु
रुषाणांचप्रेरकःसन्सदाहरे । स्वरूपैर्बहुभिर्युक्तआयाहिसमसद्गुणैः ॥७॥ ( आये ॥८॥ अभित्वा ) ॥९॥
॥ ३७ ॥ १९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमदृग्भाष्येप्रथमोध्यायः ॥ १ ॥
श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॥ॐ॥ ( अयंदेवाय ) सर्वज
न्मकृतेविष्णुदेवायेयंस्तुतिःकृता । मुखेनविप्रैःकाण्वाद्यैःसैवयद्रतिधातमा ॥ १ ॥ ( यइंद्राय ) वाङ्मात्रेणैव
योज्यौयेचक्रुरिंद्रायवाजिनौ । शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागंचलेभिरे । भगवांश्चैतदखिलंकृतवानृभुसुस्थि

तः । पृथग्वाफलदातृत्वात् ॥ २ ॥ ( तक्षन् ) परितोज्मांयतश्चरेत् । परिज्माऽतोरथःकाम्यंसबरित्यभिधीय
ते । बकामनइतिह्यस्मात् ॥ ३ ॥ ( युवाना ) सुधन्वैषांपितास्मृतः । बृहस्पतेःकामधेनुमृजुभक्ताऋजूयवः ।
अवेतनंस्वामिबलात्कर्मविष्टयत्रतेकृत । ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः । येषांभूतमृतंकर्मयज्ञभागास्ति
तोपिते ॥ ४ ॥ ( संवः ) सहेंद्रेणसहादित्यैःप्राप्तायुष्माकमिंदवः ॥ ५ ॥ १ ॥ ( उतत्यं ) एकंचमसंचतुरःकु
रुतेत्याहतान्पुरा । त्वष्टाग्निश्चैवदेवानांवाक्यात्तदपितैःकृतं । ह्यादिस्वोक्तंपरित्यज्यत्वष्टुःशुश्रूषणंकृतं । तंपूर्वं
कृतमेवैकंचमसंचतुरोकृत ॥ ६ ॥ ( तेनः ) सप्तसंख्यानिरत्नानित्रिकालेष्वपिधत्तन । पुराणपंचरात्रेतिहास
वेदान्हरिस्तथा । मीमांसातर्कसहितान्पंचवेदानथापिवा । सप्तच्छंदांसिवैकैकंतद्गुणैरखिलैःसह ॥ ७ ॥ ( अ
धारयंत ) सुकर्मणायज्ञभागमभजन्नप्यधारयन् । वह्न्योधारकत्वेनस्थिरत्वेनयथागतिः ॥ ८ ॥ २ ॥ १ ॥ ( इहें
द्राग्नी ) ह्वयेसोमंप्रतिचतौ ॥ २ ॥ ( तायज्ञेषु ) शुंभनंभूषणंमतं ॥ २ ॥ ( तामित्रस्य ) तौमित्रस्यप्रशस्त्य
र्थौहरेः ॥ ३ ॥ ( उग्रासंता ॥ ४ ॥ तामहांता ) रक्षांसिचोज्जतं । रक्षोरक्ष्याःप्रजायस्मादत्र्योमार्गत्रयोज्झि
ताः । पितृदेवमनुष्याणांगत्यभावादधोगतेः ॥ ५ ॥ ( तेनसत्येन ) सत्येनगुणपूर्णेनविष्णुनातेनजागृ

तं । स्वगुणैरेवविष्णुस्तुप्रकृष्टेचेतनेहरौ । पदेगम्यत्वतःसम्यक्तस्मिन्नेवस्वभावतः । तथास्थितौतुजागृतमिति विष्णुर्विशेषतः । उक्तः ॥ ६ ॥ ३ ॥ २ ॥ ( प्रातर्युजा ) प्रातःस्तुतत्वेनप्रोक्तौप्रातर्युजाविति । अश्विनौभग वांश्चैवप्रातर्योगेनगम्यते। स्तुतिशब्दःस्तुतौयस्माद्बुध्यतेवर्तमानकः।बोधयेत्यतउक्तंतत्परतोबुध्यतेकथं॥१॥ ( यासुरथा ॥ २॥ यावां ) कशयास्पृष्टिमात्रेणमधुरंकुरुतोखिलं । अतोमिमिक्षतमितिस्पर्शोमेक्षणमुच्यते । वेदवाक्यस्तुतत्वेनकशासासूनृतावती । तयैवघृतसोमादिस्पृशतंयाज्ञिकंवसु ॥ ३ ॥ ( नहिवां ॥ ४ ॥ हिर ण्यपाणिं ) हितत्वाद्रमणीयत्वाद्धिरण्यंवर्णतोपिच । रूपंनारायणस्यैवपाणिशब्दोपलक्षितं । स्रष्टृत्वात्सवि ताविष्णुःसज्ञातास्वपदादिकं । सएवदेवतामुख्यातद्गुणैक्येनदेवता ॥ ५ ॥ ४ ॥ ( अपांनपातं ) व्यक्तत्वा त्पार्थिवेदेहेसोपांनपाजनार्दनः ॥ ६ ॥ ( विभक्तारं ) सदाविभज्यदातारंवसोरुत्तमराधसः । अशेषपुण्यपा पादिविशेषैश्चितिदर्शकं । आह्वयामः ॥ ७ ॥ ( सखायः ) सराधांसिशोभयत्यंजसाहरिः ॥ ८॥ ( अग्नेप त्नीः ॥ ९ ॥ आग्ना ) नदीश्चभारतींचैवहोत्रामाहुतिरूपतः । वरूत्रींवरणीयत्वात्त्राणाद्बुद्धिस्वरूपिणीं। विष्णु श्चप्राणसंबंधाद्भारतीत्येवचोदितः । प्राणस्तुभरतोभारततत्वाद्भर्तृरूपतः। होत्राहुतत्वतोविष्णुःश्रीर्वापिधिष

 

णामता ॥ १० ॥ ५ ॥ ( अभिनः ) शर्मदत्वैवमहतोविष्णोरक्षंतुनोभितः । प्राणेनैवावसासाकंयस्मादविधवाः
सदा । अतोह्यच्छिन्नपत्रास्ताःसदायुक्तकर्णभूषणाः ॥ ११ ॥ ( इहेंद्राणीं ॥ १२ ॥ महीद्यौः ) भरणैर्नःपारये
तांदुःखेभ्यःश्रीश्चभूश्चते । स्वयंवाभगवानन्येरोदसीलोकदेवते ॥ १३ ॥ ( तयोरित् ) तयोःपयस्तुविज्ञानंघृ
तवत्सापरोक्षकं । यल्लोकदेवतापिस्याद्भारतीज्ञानदेवता । विष्णोर्नित्यपदस्थंयज्ज्ञानंयद्घृतवत्पयः । लिहंति
विप्रास्तज्ज्ञानंबुद्धिभिस्तत्प्रसादतः । गांधारयन्वर्ततेयद्गंधर्वस्तेनकेशवः ॥ १४ ॥ ( स्योनापृथिवी ) स्योना
सुखकरीस्यान्नोयतोनश्यसिनोनृवत् । निवेशनीसाऽधारत्वाच्छर्मयच्छमहत्तरं ॥ १५ ॥ ६ ॥ ( अतोदेवाः )
असुरेभ्योजगद्धृत्वायतोविष्णुस्त्रिविक्रमैः । आरभ्यपृथिवींसप्तलोकैःसाकंजगत्पतिः । चक्रेसुरान्पदस्थानप्य
तोदेवाअवंतुनः । विशिष्टबलचेष्टत्वाद्विष्णुरित्यभिधाहरेः । प्राणंबलंपकारंचणकारंचाहहिश्रुतिः ॥ १६ ॥
( इदंविष्णुः ) रमंतिपांसवोयत्रपांसुरंपदमीरितं । समूढंतत्रविश्वंहिपांसुवज्जगतःपतेः ॥ १७ ॥ ( त्रीणिपदा )
वेदान्कालान्गुणाँल्लोकान्देवमानुषदानवान् । चेतनाचेतनान्मिश्रांस्त्रीणिपदाविचक्रमे । रक्षकत्वेनसर्वाणिस्र
ष्टृभर्तृत्वतस्तथा । मोक्षदत्वेनचविभुःस्तंभनीयोनकेनचित् । धारकांश्चैववाय्वादीन्धारयन्वर्ततेततः ॥ १८ ॥ 

(विष्णोःकर्माणि) जानीथविष्णुकर्माणिप्राणिकर्माण्यशेषतः। यतोजातान्यविज्ञातोभगवान्सर्वदैवच। स्प
शाज्ञातद्दृशौयस्मादिंद्रस्यसहितःसखा। प्राणस्यैवेंद्रनाम्नश्चकस्मिन्त्वहमितिश्रुतेः। त्वयेदिंद्रेतिवचनात्प्राणइं
द्राभिधोमतः ॥ १९ ॥ (तद्विष्णोः) रमाब्रह्मशिवादिभ्योयद्विष्णोःपरमंपदं। रूपंपश्यंतिनिर्मुक्ताःसंसारा
त्सूरयःसदा। चक्षुर्दिवीवव्याप्तंयदद्दृश्यंफलदर्शितं ॥ २० ॥ (तद्विप्रासः) संदीपयंतिविज्ञानैःसंसारात्प्रा
प्तजागराः। विपन्यवोज्ञानितमाविष्णोर्यत्परमंपदं। तात्पर्याधिक्यविज्ञप्त्याअर्थमेतंपुनर्जगौ ॥ २१ ॥ ७ ॥
॥ ३ ॥ (तीव्राःसोमासः) वीर्यवंतश्चयेसोमायजमानेष्टसाधकाः। पिबतान् ॥ १ ॥ (उभा) सर्वदेवानां
ज्ञानाधिक्यौदिविस्पृशौ ॥ २ ॥ (इंद्रवायू) मनसःप्रेरकौचैवबहुज्ञानौधियस्पती ॥ ३ ॥ (मित्रं) जज्ञानौ
व्यज्यमानौतुयजमानस्यशोधकौ ॥ ४ ॥ (ऋतेन) परेणब्रह्मणातस्मिन्वृद्धौसत्यपतीसदा। सत्यंज्योतिः
प्रकाशत्वात्तौमित्रावरुणौहुवे ॥ ५ ॥ ८ ॥ (वरुणः) संसिद्धान्कुरुतांनस्तौ ॥ ६ ॥ (मरुत्वंतं) सगणस्तृ
प्यतांहरिः ॥ ७ ॥ (इंद्रज्येष्ठाः) पूषापूर्णत्वतोविष्णुस्तन्मित्राःपूषरातयः ॥ ८ ॥ (हत) सहसाबलरूपेण
शक्रेणसहिताःसुराः। मदज्ञानंहतातीवदानशीलानशक्नुयात्। दुर्वाक्तद्वान्पुमान्वानो ॥ ९ ॥ (विश्वान्) भा

रतीपृश्निरुच्यते। गोरूपाचक्कचित्साभूत्तत्सुताश्चाखिलाःसुराः। अन्यत्रापिसुतास्तस्याः ॥ १० ॥ ९ ॥ (ज
यतां) जयतामिवतद्ध्वनिः। धैर्याद्यातियदाविष्णुंवायुंवायाथनोत्तमं ॥ ११ ॥ (हस्कारात्) दोषत्यागाद्गु
णप्राप्तेर्हस्कारोवायुरुच्यते। विद्युद्विशिष्टज्ञानत्वाद्भारतीतत्सुताहिते। सर्वदेवाश्चमरुतोरक्षंत्वेताद्दशोहरिः।
तत्तदंतर्गतत्वेन ॥ १२ ॥ (आपूषन्) पूषापूर्णत्वतश्चसः। आघृणिःपूर्णरश्मित्वादाजनश्चित्रबर्हिषं। ब्रह्मा
णंचदिवोदेव्याभर्तारंवायुमाजगां। यथागतं ॥ १३ ॥ (पूषा) जगद्राजमविंदद्भगवान्सुतं। स्वकुक्षिगूढंब्र
ह्माणं ॥ १४ ॥ (उतोसः) मह्यंसोमैश्चतर्पितः। साधयामासषड्युक्तानींद्रियाणिचकारच। साधनंशक्तिदानं
तुगोभिर्वार्भिर्यथायवं ॥ १५ ॥ १० ॥ (अंबयः) अंबयोमातरोह्यापःकारणत्वात्सहोदराः। जगतोजामयो
यस्मात्सहताभिर्विवर्धते। अध्वरंकुर्वतांक्षीरंसोमंचापिप्रपृंचतीः। संपृक्ताः ॥ १६ ॥ (अमूः) याःसमीपस्थाः
सूर्यस्यसहिताअपि ॥ १७ ॥ (अपः) ह्वयामितायाःपिबंतिगावोनःसर्वथाहविः। कार्यंनदीभ्यः ॥ १८ ॥
(अप्स्वं१तः) तास्वंतरदृश्यमम्टतंस्थितं। अपामेवप्रशंसार्थंसहायाःसंतुनःसुराः ॥ १९ ॥ (अप्सुमे) तात्प ॥३३४॥
र्यार्थंपुनर्वाक्यंसुखाधारोहुताशनः ॥ २० ॥ ११ ॥ (आपःपृणीत) वरूथंगुप्तिरुद्दिष्टाज्योतिर्विष्णुदृशेतथा।

सूरिप्राप्योयतोविष्णुःसूर्यइत्यभिधीयते । पृणदाने ॥ २१ ॥ (इदमापः) अखिलंपापमापःप्रवहतापिनः । हिं
साजंशेपजंचैवतथैवानृतसंभवं ॥ २२ ॥ ( आपः ) रसेनसंगताश्चस्मोयस्मादनुचराहिवः ॥ २३ ॥( संमा
ग्ने ) कुर्युर्मामपिविद्वांसंमदर्थंसर्वदासुराः । एतंमामितिवार्थःस्यादनुजानंतुवोदितं ॥ २४ ॥ १२ ॥ ४ ॥ ५ ॥
शुनःशेपोददर्शातउत्तरंपरमृक्शतं।यूपादात्मविमोक्षायस्तुवन्देवान्पृथक्पृथक् ।त्र्यूनंशतमिहैवान्यच्चतुर्थेपंच
मेपिच । मंडलेब्रह्मणोक्तस्तुक्रमोत्रापिह्यृचांभवेत्॥( कस्यनूनं ) कर्तुःपरानंदतनोरिदानींमनामहेचारुविष्णोः
सुराणां । नामेशश्रेंदिंदिरायैपुनर्दाद्दृशेयंतांमातरंतंचदेवं।समुक्तानामसृतानामजेशमुख्यानांचाभ्यधिकोय
त्सुखादौ । तेनोक्तोसौकतमोखंडितत्वात्सचादितिर्महतीतन्महीच । देशानंत्यात्तन्महत्त्वंगुणैस्तुकालाच्चोक्तं
तस्यचाखंडितत्वं।सएवमाताचपिताचदेवस्तस्मिन्सदासंस्थितास्तत्पुनर्दात्। अत्तिविश्वंतेनचैवादितिस्सश्री
र्वाब्रह्माप्रोक्तएवंकएव । गुणाश्चतस्याभ्यधिकाःसदैवजीवेभ्यस्तत्सोपितद्वाक्ययोग्यः । ददात्वसौविष्णवेचें
दिरायैप्राप्तानस्मानपितौसर्वगत्वात् । विशेषदेशप्राप्तितस्तस्यचास्तिवैकुंठादिर्लोकउक्तोहरेश्च ॥ १ ॥ (अग्नेर्व
यं ) तस्यैवान्यद्रूपमग्न्याख्यमुक्तंयोयज्ञेशोहूयतेजामदग्न्यः । सदेवानांप्रथमोनामतस्यस्मृतंसार्थंसर्वकामप्रदं

स्यात्॥ २॥ (अभित्वा ) सवितेत्यपरंरूपंजगत्कारणमीशितुः । वित्तानामीश्वरंतंतुवार्यंहिवरणीयतः । वि
त्तंरक्षन्नवन्नित्यमात्मानंभागमेम्यहं । त्वामैश्वर्यादिसमितिं ॥ ३ ॥ (यश्चित्) योपितेपरमोभगः । इत्थंभूतो
विकारित्वाच्छशमानःसुखाधिकः । नेदीयसोब्रह्मणोपिपूर्वोद्वेषादिवर्जितः । हस्तयोस्तंदधेदेवतवरूपमनाम
यं । निदोदवीयइतितुविरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनावुभावपिमहोदधौ । यदान्यस्सवितादेवस्तव
स्वामीभगोहरिः । अद्वेषोविष्णुरित्युक्तेस्तमहंहस्तयोर्दधे ॥ ४ ॥ ( भगभक्तस्य ) विष्णुभक्तस्यतेरायोमूर्धा
नंरायउत्तमं । तवावसारभेविद्यामुच्चैरश्नामितत्फलं । ऐश्वर्यादिगुणायस्यभगोभक्तंपरात्मनः । तस्यतेवित्तम
श्नामितवरक्षाबलाद्धरे ॥ ५॥ १३ ॥ (नहिते ) क्षतात्त्राणंतेबलसंविदंचपूर्णनापुर्मुक्तिगायेविशिष्टाः । अ
पिस्वयंसंसृतेरुत्पतंतःपतयंतोन्यांच्छिष्यभक्तानुदाराः । सदाशुभान्याचरंतोपिदेवाअब्देवताआपइतिश्रुति
र्यत्।गंगाद्यावावायुदेवस्यविष्णोरुत्पत्तिंयेजानतेदेवसंघाः । वयःसुपर्णाइतिवापि ॥ ६ ॥ (अबुध्नेराजा ) अबु
ध्नेप्रकाशतःसंभजतःस्वमुच्चैः । स्तूपंस्थानंददतेपूतदक्षोनीचस्थाअप्यूर्ध्वगास्तेनतस्थुः । नीचाश्चयेमुक्तिगा ॥३३५॥
मानुषाद्यास्तेषांबुध्नोनीचलोकःसुरेभ्यः । नीचागुणाअप्रकाशोथवैषांनीचोच्चत्वंक्रमशश्चाविरिंचात्।अस्माक

मंतर्निहितानिनित्यंज्ञानानिभूयासुरतोधिकानि।भवंत्यर्हाभवितुंवाभविष्याःस्युर्द्विग्रेहेप्रार्थनैवाधिकार्थे॥७
(उरुंहि) उरुंराजारंजनाद्राजनाद्वासूर्यायपंथानमसौचकार।स्वाज्ञानुसारेणसदैवगत्यैपादावपादायचगंत
वेकरोत्।अज्ञायविज्ञानमकःसगंतुमात्मानमित्यर्थइहांजसोक्तः।बुद्धेर्धातुःशंकरस्यापिदोषान्वक्ताज्ञानाच्छि
क्षकत्वाच्चविष्णुः॥८॥(शतंते) जगद्रक्षासाधनान्यप्यनंतान्यनंतधासंतिपुनस्तवेश । अगाधरूपामहती
शुभाचमतिर्ममत्वद्विषयेसदास्तु।ऋतज्ञानप्रतिरूपत्वहेतोर्निर्ऋत्याख्यांदुर्मतिंदूरएव।बाधस्वदुर्ज्ञानिजनंनिर
स्यस्वर्गात्पराकृत्यचशश्वदेव। कृतंचपापंप्रमुमुग्धिमत्तः॥९॥ (अमीये) ऋक्षाण्यमीनिहितानित्वयोच्चैः।
दृश्यानिरात्रौनदिवात्वयैवेत्यादीनिकर्माण्यनिरोधितानि । पश्यन्परानंदतनोस्तवैवचंद्रोनित्यंदृश्यमानस्त्व
यैव। संप्रेरितोयातिपरेचदेवाएवंत्वदाज्ञाकरणाःसदैव ॥१०॥१४॥( तत्त्वायामि) एवंगुणोयत्त्वमतोत्र
जामिसदाशरण्यंशरणंवेदवाचा। नमन्नन्योयजमानोहविर्भिस्तदाशास्तेत्वद्गतिंदेवदेव। अनिंदन्नस्मान्नरमा
त्रबुद्ध्यासंबोधयोच्चैःस्तुतमास्मदायुः। छेत्सीः ॥ ११ ॥ (तदित्) नक्तंदिवसेचैतदेवस्तोत्रंत्वदीयंप्राहुरार्याः
सुकार्यं। मह्यंकेतोज्ञानरूपोहृदिस्थोनारायणोवक्त्ययंतेन्यरूपं। पश्यत्यपीशोयंसमह्वद्गृहीतःसनोदेवोमोचय

त्वग्र्यदुःखात् ॥ १२ ॥ ( शुनःशेपोह्यह्वत् ) शुनःशेपोह्यह्वद्गृहीतःस्थानत्रयेविक्रयाद्यैःसुबद्धः । द्रुतंप्रासानि
द्रुपदानिविक्रयोयूपेबंधःसंज्ञपनोद्यमश्च । आदित्योसावादिसंस्थःपरेशोवारीशांतःसंस्थितःस्तूयतेत्र । शुनः
शेपोयमित्यादिकेनवारीशोपिह्यृषिणास्तूयमानः। गुणास्त्रयोद्रुपदानीतिचोक्ताद्रवत्ययंजीवसंघोहियत्र । क
रोत्वेनमवसृष्टंसृतेःसप्रसन्नोस्मान्कर्मपाशान्मुमोक्तु ॥ १३ ॥ ( अवते ) निंदांचतेऽवाग्गतेर्हेतुभूतामवग
च्छामःसेयमित्यप्ययोग्यां । नमस्कारैस्त्वद्गतैस्त्वन्मखैश्चहविर्युक्तैस्त्वत्प्रसादात्सचत्वं । क्षितिरस्मभ्यंप्राणरंता
खिलज्ञोवियोजयास्मत्कृतान्याश्वघानि॥१४॥(उदुत्तमं)पुण्यंपापंमिश्रमित्येवपाशान्यथायोग्यंश्रथयान्येषुद
त्वा ।त्वन्निष्ठयातेनवयंत्वदीयलक्ष्म्याःपुत्राःस्याममुक्ताःसृतेश्च । एषर्ग्विष्णोःकेवलाप्येवमन्याअयोग्यायाअ
न्यदेवेषुसम्यक्। वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेयागुणाअन्यदेवेषुचैव।पतिःसोमोवरुणस्याप्यथाग्नेःपतिःसूर्यस्ता
वुभौतुल्यवीर्यौ।सूर्याचंद्रमसोःपतिरिंद्रोस्यरुद्रःपतिर्ब्रह्मापतिरस्यापिविष्णुः ।पतिर्मुक्तेर्वासुदेवोथदृष्टेर्ब्रह्माविं
द्यायाःशर्वइंद्रःक्रियायाः । क्रियांशानामधिपाअन्यदेवास्तथाफलानामपिमुक्तिमार्गे । यथायोग्यंस्वेंद्रियप्रेर
काश्चततःपूज्यादेवतामुक्तिकामैः । इतिश्रुतेस्तारतम्यंगुणानांज्ञात्वायोज्याःश्रुतयस्तत्रतत्र ॥ १५॥ १५ ॥

॥ ५ ॥ (यच्चित् ) दिवसेदिवसेदेवकुर्मोयदपितेव्रतं । यथैवसुजनाः ॥ १ ॥ ( मानोवधाय ) मानोहंतु साधयनिघ्नते । जिहीळानस्यजन्धर्महरतोमाचमन्यवे ॥ २ ॥ ( विमृळीकाय ) मनस्त्वयिनिबध्नीमोगीर्भि रश्वंवियोजितं। बध्नातिसारथिर्यद्वन्मृळीकोरक्षकोधिकं। त्वन्मनोस्मासुवागीर्भीरक्षणायविसीमहि ॥ ३ ॥ ( पराहि ) पराक्पतंतिप्रज्ञामेविविधाःशुभलब्धये। पक्षिणोवसतीर्यद्वद्धानत्वांप्राप्नुवंतिच ॥ ४ ॥ ( कदा ) अतोखिलक्षत्रपतिमाह्वयामःकदावयं ।अविनाशिनंरक्षणायमहादर्शनमंजसा॥५॥१६॥ ( तदित् ) तत्प्रसा दाद्ब्रह्मवायूसममेवावगच्छतः।वेनंतौहिविजानंतौतौहिज्ञानिवरौमतौ। यथाज्ञानंप्रयोगंचदाशुषेकुरुतोनतौ अश्विनौवरुणश्चेत्स्यात्॥६॥(वेदायः)आकाशेपक्षिणांपदंवेत्त्यसौसूक्ष्मविज्ञानात्तथानावोजलेब्धिगः।मुक्ता नांचस्थितिंवेदज्ञानस्यचगतिंपरां।क्षीराब्धिशयनोविष्णुः॥७॥ (वेदमासः ) कालंकालोद्भवैःसह। यआत्म नःसमीपेचजायतेतंचपद्मजं। मुक्तंवा ॥ ८ ॥ (वेदवातस्य ) वर्तनांवायोर्महतोतिप्रकाशिनः। बृहतोज्ञानिन श्चैवबृहतोमहतोपिवा । अधिकानिपदान्येवदेवाअध्यासतेपितान्॥९॥ ( निषसाद ) साम्राज्यायसपस्त्यासु निषसादप्रजासुच। सुज्ञानः ॥ १० ॥ १७॥ (अतोविश्वानि ) तत्रसन्विश्वान्यद्भुतानिचपश्यति। कर्ताचिकि

त्वान्सकृतकर्तव्यानिचपश्यति ॥ ११ ॥ ( सनः ) विश्वान्यहानिनोदेवःसुपथानिकरोत्वसौ । ददात्वायूंषि
नोनित्यंमुक्तौवा ॥ १२॥ (बिभ्रत्) अतिद्रुतभ्रमं । हितंचरमणीयंचचक्रंस्वर्णंचवर्णतः ॥ अबिभ्रच्चसुनिर्णि
क्तंशुद्धंवस्त्रमवस्तव । अविज्ञातचरादेवाःस्पशस्तस्यनिषेदिरे । परितोवरुणःपाशमबिभ्रद्द्रुतबंधनं ॥ १३ ॥
(नयं) स्तंभयंतिनयंवीरास्तंभकाअपिराक्षसाः । जनानांद्रोहिणोदैत्याःशत्रवश्चाभिमातयः ॥ १४ ॥ ( उ
तयः ) असमंचयशश्चक्रेयोस्माकंहृदयेषुच । आमानुषेषुचान्येषुसमंतादात्मनःसदा । अज्ञेष्वपिचमर्त्येषुव्यत
नोदात्मनोयशः ॥ १५॥१८॥ (परामे ) महाज्ञानंपरेशानमिच्छंत्योममधीतयः ॥ सर्वतोयांतियद्वच्चगावः
शृंगस्वराननु ॥ १६॥ ( सन्नु ) आपूर्णमधुमोक्षस्थंसुखंपचसिमेभिवत् । तत्संवोचावहैभूयःप्रियस्त्वंममयत्स
दा ॥ १७॥ (दर्शन्नु) अदर्शंतंचसर्वज्ञंतद्रथंचभुविस्थितं । सुगिरोमेजुषतच ॥ १८ ॥ (इमंमे ) त्वाऽवनेप्सु
रहंचके ॥ पश्येयं॥ १९ ॥ (त्वंविश्वस्य ) त्वंचविश्वस्यराजाभवसिमेधिरः । मेधावान्गमःपृथिव्याश्चसकालेच
प्रतिश्रुधि ॥ २० ॥ ( उदुत्तमं ) सत्वंत्रिगुणपाशान्नोमुमुग्धिछिंधिचांजसा ॥ २१ ॥ १९ ॥ ६ ॥ अथस्तौ
त्यग्निगंविष्णुमग्निमप्यग्निगोचरैः । वचनैः ॥ ॥ ( वसिष्व ) सर्वदेवानांपूजायैप्रोद्यतोभवन् । वसिष्वोत्तमव

स्त्राणिभूषणैरप्यलंकुरु।कुर्वन्नुत्सवमत्यंतमस्मदीयंमखंयज। नित्यमेध्यहरेर्देवभोग्यान्नानांसदापते। ऊर्जिता नांजनानांवास्वस्मिन्नोअध्वरंयज।रमयत्यध्वनिशुभेयेनतेनाध्वरोमखः ॥ १ ॥ (निनः) वचोनोनिनयात्यं तंदिविव्याप्ततयासदा। अशेषदेवगत्वेनमन्मभिर्मतिभिःसह। अवमोदशदेवेषुवह्निर्विष्णुस्तुतत्स्थितः ॥ २ ॥ (आहि) सख्येचसूनवेमह्यमायजत्वेषदेवताः। आपिःप्राप्योममस्वामीभृत्यत्वान्मह्यमापये ॥ ३ ॥ (आ नः॥ ४॥पूर्व्यहोतः) अस्यमेर्थेकुरुमदंस्वातंत्र्यान्मादयस्ववा ॥ ५ ॥ २० ॥ (यच्चित्) शश्वद्विस्तरतःस र्वान्यदादेवान्यजामहे।तदात्वय्येवहिहविर्हूयते ॥ ६ ॥ (प्रियोनः) सप्रियोभव । मंद्रोमदकरः॥ ७ ॥(स्व ग्नयः ॥ ८ ॥ अथानः) स्त्रीणांपुंसांचोभयवर्गिणां ॥ ९ ॥( विश्वेभिः) चनःसुखंधाअस्मासुवायोःपुत्रोग्निरे वचेत्। भगवान्वायुनाव्यंग्यो ॥ १० ॥ २१ ॥ ७॥ ( अश्वंन )वारवान्बडबामुखः । स्वदृष्टांतोहरेर्यस्माद्वि ष्णुःसबडबामुखः ॥ १ ॥ (सघ)सूनुःसशवसोवायोःपृथुज्ञानःसुशेवकृत् । सुखकृन्नोभवेन्मीढ्वान्स्वामिनः सूनुरेववा। व्यंग्यत्वाद्वायुनासार्धंसुशेवःसुसुखात्मकः ॥ २ ॥ (सनः) आसात्समीपतश्चास्मानघार्थायोर्नि पाहिच। प्रतिप्रतिसदोनित्योविश्वायुः ॥ ३ ॥ (इममूषु) त्वमिमांस्तुतिं। सनिंदानस्वरूपांचगायत्रीछंद

आत्मिकां। नव्यांसंस्तुतिषुश्रेष्ठांवददेवेषुसादरं ॥ ४॥ (आनः) उत्तमाधममध्येषुभोगेष्वस्मानवाशुहि। रक्ष
कत्वेनशिक्षास्मान्ज्ञानवस्वर्थमेवच। अंतेमोक्षेमितत्वेनज्ञानमंतममुच्यते ॥ ५॥ २२॥ (विभक्तासि) क्षीरा
ब्ध्यूर्मिसमीपस्थोमुक्तभोगविभागदः। यजमानायसद्यश्चक्षरस्यखिलमीप्सितं। नित्यमुत्तमतेजस्त्वाच्चित्रभानु
र्हरिःस्मृतः ॥ ६॥ (यमग्ने) यंमर्त्यंरक्षसिविभोयंयुत्सुप्रेरयस्यपि। ज्ञानाज्ञानात्मकेष्वेवसंगतानित्यसत्सुखं।
भोगान्वामुक्तिगान्नित्यानिहचेदुपचारतः॥ ७॥ (नकिः) परिपूर्णोस्यनैवास्तित्वदीयस्यतुकस्यचित्। भो
गोपिबहुलोयस्माद्दित्सस्येवपुनःपुनः। सहंत्यःसंततबलःसहसःपुत्रएववा। श्रवाय्यःश्रवणीयश्चसुप्रसिद्धत
मोपिवा ॥ ८॥ (सवाजं) वाजंतारयिताऽनेतासोर्वद्भिर्गोसमासितः। त्वदीयस्तुभवेद्धिप्रैर्दाताविपुलदा
नतः। युद्धस्यतारकोन्नस्यदाताभोगस्यवाभवेत्। इंद्रियैस्तमसायुद्धंतरुताज्ञानदोथवा ॥ ९॥ (जराबोध)
स्तुतिबोद्धायतस्तांत्वमवधारयसर्वदा। नित्यज्ञानोपिदत्वातत्फलंवेत्तेतिकथ्यते। रुजांविद्रावकेशायप्रत्यक्षांतव
वास्तुतिं ॥ १०॥ २३॥ (सनः) नितराममितत्वेनमहान्पुरुसुखश्चसः। धूत्करोतिगरुत्मान्यद्धरेश्चेद्धूमकेतु ॥३३८॥
ता। ताच्छील्येमइतिह्यस्मात्सूत्राद्धूमइतीरितः। ज्ञानायान्नायचसनःप्रहिणोतुसुकर्मणां ॥ ११ ॥ (सरेवा

न्) देवानांकेतुभूतोसौवित्तवान्विश्पतिर्यथा। अस्मदीयानिचोक्थानिबृहत्तेजाःशृणोतु ॥१२॥ (नमः) अ
थ।नारायणब्रह्मपुरःसरास्तुदेवामहांतःशिशवःस्कंदपूर्वाः। वटुस्वरूपाश्चतएवकुत्रचिद्युवानइंद्रादयएतएव।
महत्त्वमेषांगुणतोपियूनामिंद्रादयोमध्यगुणायुवानः। आपेक्षिकाल्पैश्चगुणैस्तदीयैःसमीरिताआशिनाअर्भ
काश्च।कृतंनमःशक्तिमंतोयजामनज्यायसांस्तुतिमात्रंलुपामः। एकस्यविष्णोरपिरूपभेदाअणीयांसःसंत्यथ
वामहांतः। युवत्वसाम्येपिमहत्त्वभेदाद्युवामहानित्यपिभेदउक्तः॥१३॥२४॥८॥ (यत्रग्रावा) विस्तीर्णा
धस्तनायत्रग्रावाणोभिषवोद्धृताः।धिषणाभिषुतान्सोमानवनःस्वीकृतस्तुते।गुरुस्वीकारइत्यस्माद्धातोःस्तुत्यो
हिजल्गुलः॥१॥ (यत्रद्वौ) फलकेभिषवस्यैवस्त्रियोजघनसाम्यतः। प्रोक्ते॥२॥ (यत्रनारी) उपच्यव
श्चापच्यवःसंगतिभेदतः। जिह्वाग्रावाथवाग्युक्तिरुच्यतेभिषवस्तथा।खलश्चोरुस्तथादेहःसोमोमनइतीरितः।
ज्ञानोत्पत्तौचफलकस्थानेओष्ठेउदीरिते॥३॥ (यत्रमंथां) मंथरश्मीनश्वरश्मीन्यथायत्रनिबध्यते। रश्मयो
यत्रनाड्यश्च॥४॥ (यच्चित्) यस्माद्युक्तोगृहेगृहे। देहेदेहेथवातेनद्युमइंदुभिवद्वद। पृथिवीदेवतातस्यत
द्गतोवास्वयंहरिः। सोमामात्योपरोदेवोवनस्पतिरितीरितः। सोमोवातद्गविष्णुर्वाश्रुतःफलकदेवता। वृक्षाणा

मपिसर्वेषामतः ॥ ५ ॥२॥ ( उतस्म ) वृक्षाग्रएवतु । वायुर्वातिवनानांवाभजनीयदिवौकसां । पतिर्विष्णु स्तुतस्याग्रेवायुर्देवोहिगच्छति । पातवेस्वस्यसोमंवामनोवासुनुविष्णवे ॥ ६ ॥ (आयजी ) आयाज्यावन्नल ब्धृणामुत्तमावतिभक्षकौ । जहभक्षणइत्यस्माद्यथाश्वावन्नभक्षकौ । सोमस्यभक्षकावत्र ॥ ७ ॥ (तानः ) ऋ ष्वावतिमहत्तरौ । महद्भिःसोतृभिःसोममिंद्रायमधुमत्सुतं ॥ ८ ॥ (उच्छिष्टं ) सोममुत्पवनार्थैतंद्रोणोपरिप वित्रके।भरशिष्टंचमसयोर्ऋजीषंगोरधित्वचि । भरेत्यात्मानमेवाहस्वांतर्यामिणमेववा।शिरोभेदौतुचमसौद्रो णंचोदरमीरितं । पवित्रंबुद्धिरेवात्रमनःशुद्धिस्तयायतः । मुखचर्मैवगोचर्ममनएतेषुविष्णवि । धार्यं ॥ ९ ॥ ॥ २६ ॥ ९ ॥ ( यच्चिद्धि ) यत्सद्गुणाशस्ताइवस्मसिवयंततः । शुभ्रवाङ्मनआदीनांविषयेस्मान्प्रशंसय । बहुवाच्यज्ञेययुक्तान्कृत्वास्मांस्त्वंमहामख ॥ १ ॥ ( शिप्रिन् ) सुखिन्नन्नपतेवाग्ज्ञतवकर्माणिसर्वशः ॥ २ ॥ ( निष्वापय ) दैत्यरक्षःप्रजेमिथ्याहशौसस्तांपुनर्बहु । अबुध्यमानेनित्यंचयथानिष्वापयेश्वर ॥ ३ ॥ (ससं तु ) स्वपंतुतेशत्रवस्तेसर्वदाऽज्ञानमोहिताः । बोधंतुचैवमित्राणितवरूपंसुनिर्भयं ॥ ४ ॥ ( समिंद्र ) पापया माययामिथ्यास्तुवंतंत्वामपिप्रभो । मायामयास्तवगुणानसंतिपरमार्थतः।इतिनित्यंरुवंतंचमायावाग्याख्यग

र्दभं । संचूर्णयतमस्येवक्षिस्वातस्त्राश्मभिःसदा ॥ ५॥ (पताति ) दूरंचपातयत्वेनान्वायुस्तस्मिंस्तमस्यधः ।
वनंदृढग्रहेणैवतत्तमोवेदनोल्बणा । कुंडूणाचीतिसंप्रोक्ताकुंडान्नीचत्वतोधिकं । कुंभःकुंडाभिधःकुंभीपाका
न्नीचाहितद्गतिः । रेफःस्वरव्यत्ययश्चतदाधिक्यार्थमीरितौ ॥ ६॥ (सर्वं ) सर्वंपरिक्रोशकरंपापिनंजहिजंभय।
दंशयश्वादिभिर्नित्यंक्रकचैर्दंशनंयथा ॥ ७॥ २७॥ १०॥ ( आवः ) हेवाजयंतोयुध्यंतोदेवाभोगिनएववा।
सोमैर्वइंद्रमासिंचेक्तर्वियद्वन्नृपंक्ततेः । कर्तारमीशमिववास्वदृष्टांतोहरेर्भवेत् ॥ १॥ (शतंवा ) शतेनवासहस्रे
णसोमानामाशिरावतां। पातालइवनैवायंनिलीनोभवतिक्कचित्। विलापयतितानेव॥ २॥ ( संयत् ) ब
लिनेस्मैमदायच । संदधुर्नैवविश्वानिव्यक्तीरस्योदरेक्कचित् । समुद्रेकात्समुद्राख्याप्रकृतिश्चमहत्त्वतः ॥ ३॥
( अयमुते ) तवैवायंप्रपंचश्चकपोतोगर्भधिंयथा । सम्यग्व्याप्तोषिविश्वंचतस्मान्नोवचओहसे ॥ ४॥ ( स्तो
त्रं ) गिरांवाहकतेस्तोत्रमखिलंवेदवैदिकं । सूनृतावागियंमेचविभूतिरितिकल्प्यतां । अस्त्वित्येतत्प्रसादेन
फलदानादुदीर्यते॥ ५॥ २८॥ (ऊर्ध्वः) उत्तमःसन्नत्रयुद्धेज्ञानाज्ञानमयेविभो । अभिप्रेतार्थसिद्ध्यर्थमस्मा
कंतिष्ठसर्वदा । मत्स्थितस्त्वमहंचैवत्वामन्येषुब्रवावहै ॥ ६॥ ( योगे ) तेजस्वितममिंद्रंतंयोगेयोगेहवामहे

॥ ७ ॥ ( आघ ) उक्तंचेत्सशृणोत्येवश्रुतंचेदागमिष्यति । बह्वर्थयुक्ताभिप्रायैरन्नैरप्युपनोहवं ॥ ८ ॥ ( अ
नु ) पुरातनस्यविष्णोस्तदोकसोर्थेह्वयेहरिं । महान्प्रतिप्रतिस्थश्चतुविप्रतिरितीरितः । यंत्वांपूर्वंपिताज्ञातैवा
ह्वयामासविश्वकृत् । त्वद्भक्तइतिवाब्रह्मा ॥ ९ ॥ ( तंत्वा ) तंत्वामाशास्महेवयं ॥ १० ॥ २९ ॥ (अस्माकं)
अस्माकंसुखिनांसोमपातॄणां ॥ ११ ॥ (तथातत्) अस्तुतत्तथा । तेसकाशाद्यथेच्छामःप्राप्तुंदेवतथाकृणु । वज्रो
ज्ञानंवजगताविव्यस्मात् ॥ १२ ॥ (रेवतीः) वित्तसंयुताः । रेवतीःपशवःप्रोक्ताःसधमादेसुखस्थितौ । तुविवाजाम
हान्नानिक्षुमंतःस्थितिसंयुताः । ज्ञानयुक्तंसुखंवास्यात्सतीशोस्माकमूर्जितं ॥ १३ ॥ ( आघ ) त्वद्वांस्त्वयैवचा
प्तःस्यात्स्तोतॄणामासमंततः । इयानोगम्यमानस्तैरणतोश्चक्रयोर्यथा । अक्षमाश्रयभावेन ॥ १४ ॥ ( आयत् )
स्तोतॄणांकाममादुहः । आसमंतात्स्थितंकाममत्याधिक्येपृथक्पदं ॥ १५ ॥ ३० ॥ ( शश्वदिंद्रः ) क्रोधाच्छ्वस
द्भिःप्रथयद्भिरात्मवीर्यंसुरैःशश्वदिंद्रोजिगाय । धनानिनःस्वर्णरथंचदातालब्धाप्रादाल्लाभकृतेचनोखिलं ॥ १६
( आश्विनौ ) गोमद्धिरण्यवच्चस्याद्यथायातंतथैवनः । सुखपुत्रयुजाचाश्ववत्येषाशंसुखंयतः । इडैश्वर्यंतथावी ॥३४०॥
रंवीर्यंस्वान्यश्वनामतः । गौर्वाग्घितंचरमणंपरंब्रह्मगुणोच्छ्रितं ॥ १७ ॥ (समान) समानयोगयुक्तोयंरथोदेहस्त्व

दात्मनां । चित्सुखत्वादमर्त्यश्चज्ञायतेक्षीरसागरे । मोक्षस्ययावताप्राप्तिःसमानोयोगउच्यते॥ १८ ॥(न्य१ङ्य स्य ) एकंचक्रंगिरेर्मूर्ध्निनियतंदिविचापरं । पापंचक्रंहरिङ्यस्यपुण्यंदिव्यस्यचोपरि ॥ १९ ॥ ( कस्ते ) को मर्त्यस्तवभोगाययतःसर्वप्रियोभवान् । किमपिप्रियमस्येतिपूर्णानंदात्कथप्रियः । आप्तकामत्वतःकंवागच्छ सिस्वार्थहेतुतः । विशेषाद्धावृतेर्विष्णुःकथितश्चविभावरी ॥ २० ॥ ( वयंहि ) चिंतयामस्तवैकस्यविश्वमांतप राकयोः । पराकःसुसुखैवश्रीरंतःकलिरुदाहृतः । नरकस्वर्गयोरेवदेव्युषाउदितायदा।जात्यश्ववत्सदाभद्रेचा रुणे ॥ २१ ॥ ( त्वंत्येभिः ) प्राणवाक्सुते । तद्यंग्यत्वाद्धरिश्चैवदिवस्पुत्रउदाहृतः ॥ २२ ॥ ३१ ॥ ११ ॥ ६ ॥ अग्नींद्रादिगतंपृथक्स्थितमपिस्तौत्यच्युतंभक्तितःस्वर्णस्तूपइतिप्रसिद्धिमगमद्यःसंस्तुवन्सूर्यगं। विष्णुंस्वर्णस मानचारुवपुषंस्वर्णाभिधंशाश्वतंतंदृष्ट्वापरतोभवच्चमहितःसुज्ञानमप्याप्तवान् ॥( त्वमग्नेप्रथमोअंगिराऋषिः) अंगेरसोज्ञानतएवचर्षिःसखाप्रियत्वेनदिवौकसांहरिः।तवव्रतेनैवसविद्यकर्मिणोमहाविज्ञानामरुतोबभूविरे ॥ १ ॥ ( त्वमग्नेप्रथमोअंगिरस्तमः ) व्यापीचविश्वस्यसुमेधयायुतोजडाजडेवेत्तितथाब्धिशायी । कतिप्रका रोपिसहिप्रजायैस्वामीगुरुर्नित्यसखापिताच ॥ २ ॥ ( त्वमग्नेप्रथमोमातरिश्वने ) त्वंविष्णोप्रथमोमातरिश्वन

आविर्बभूवास्यसुबोधवत्वात्।वायुर्विवस्वान्विविधेषुवासादशोभेतांश्रीश्चभूःसर्वहोतुः।वरत्वतस्तेरदनाद्रोद
सीतेसैकाहिदीर्णाद्विविधाबभूव। सहंतेमुंनैवकेचिद्व्यसह्युर्वायुर्विरिंचोपिमहांश्चतस्मै। विश्वस्यभारंप्रतिदिष्ट
वांस्त्वंवासाच्चसर्वत्रवसुर्भवानसि ॥ ३ ॥ ( त्वमग्नेमनवे ) विशिष्टबोधान्मनवेवायवेत्वंप्रादादिवंज्ञानरूपांप्रि
यांच । यथातदीयेतितुवाशनंस्यालोकस्यसर्वस्यतथैवदेव। पुरूरवावायुरेवोरुशब्दादन्यस्मैवासुकृतेसुकृत्त
रः।श्वावैवायुःश्वसनात्राणतोस्यनित्यंमुक्तःप्रकृतेःपूरुषाच्च । तेनैवत्वामानयन्पूर्वसंतोनीतंपुनश्चाप्यपरेसुभ
क्त्या॥ ४ ॥ ( त्वमग्नेवृषभः ) श्रोतव्यस्त्वंयजमानेननित्यंनित्यायुरग्रेजनताप्रविष्टः । ऐश्वर्याद्याःषड्गुणाय
त्रवृत्तावषट्कारस्यार्थइत्याहवेदः॥५॥ ३२ ॥( त्वमग्नेवृजिनवर्तनिं ) सद्विद्याख्येविदथेसंप्रजातेपापाचारं
पुरुषंवापिपर्षि । सक्मन्गृहेस्वेविविधप्रजेशोविचर्षणिःशूरसातौचयुद्धे । सातिर्लाभेयत्परितक्म्येधिगम्येद
भ्राअपित्वांशरणंयदिस्म । ऋतागतास्तत्रहिभूयसोपितैर्हंसिशक्त्यासंख्ययावाप्रयत्नात्॥ ६ ॥( त्वंतं ) दि
नेदिनेतत्स्तुतिंश्रोतुकामस्तवस्तोतारमसृतत्वेदधासि। प्रीत्याधिक्यात्ततृषाणोमनुष्यदेवोभयेषांसुखमातनो ॥३४१॥
षि। आसमंताज्ज्ञानिनेतत्रनित्यंप्रियंमोक्षाख्यंततृषाणोविशेषात् ॥ ७ ॥ ( त्वंनोअग्नेसनये ) प्रज्ञाधनानां

लब्धयेनःकृधित्वंयशस्विनंकारिणंज्ञानदंच। कर्तापरोक्ष्यंयावदुपासनादीन्कारुस्तेनप्रोच्यतेतत्त्वदर्शी।संस्तूयमानःकर्मणानूतनेनसमृद्धिंचप्राप्नुमःप्राक्तनस्य ॥ ८॥ ( त्वन्नोअग्नेपित्रोः ) त्वंनःपित्रोःप्रकृतेःपूरुषस्यसमीपस्थस्तन्नियंतासदैव । देवेषुत्वंजागृविर्नित्यवेत्तातनूकृन्नोबोधयप्राज्ञवर्यः । विश्वंवसुप्रार्पयसेचकारवे ॥ ९ ॥ ( त्वमग्नेप्रमतिः ) आयुष्करोभ्रातरस्तेवयंच । देहेत्वेकस्मिन्गर्भवद्वासतश्चभ्रातास्यजीवःपरमस्यनित्यं ॥ १० ॥ २२ ॥ ( त्वामग्ने ) आयोराज्ञोहृदयेप्रेरकत्वादायोरायुर्नहुषस्याधिपश्च । चक्रुर्देवादेहसृष्ट्यैवतस्ययन्नामांतर्यामिणोजीवगंच । नामार्थभाग्वासुदेवोहिशक्त्यातेनह्यायुःप्रथमोसाविहोक्तः । मनुर्नाम्नामनुषस्तस्यचेलापुत्रीनामास्याअपिविष्णोःसदैव । इळेड्यत्वादुपजीव्यत्वतश्चसएवायुरयनाज्ज्ञानतश्च।तच्छास्यत्वाच्छासनीमानवीळातच्छासकत्वाच्छासनीवासुदेवः । ममत्वकर्तुर्हिपितुःसपुत्रःस्वातंत्र्यंचममतानान्यदस्ति ॥ ११ ॥ ( त्वन्नोअग्नेतव ) त्वंनोमघोनोयजमानस्यतन्वस्तवैवरक्षाशक्तिभीरक्षदेव।चशब्देनज्ञानभक्त्यादिकंचसदास्माकंयजमानस्यचाद्धा । त्रातातोकस्यपुत्रस्यचत्वंसंततित्वात्तनयस्यास्यसूनोः । गवांचत्वंरक्षिताज्ञानसौख्यवाचांवाद्धैवानिमेषानसुरांश्च । संरक्षमाणस्त्वद्व्रतेतैःप्रवृत्ते ॥१२॥ ( त्वमग्नेयज्यवे ) यज्योश्चत्वं

पालकोह्यंतरश्च ।नितरांयःसंगहीनोऽनिषंगस्तस्मैभक्त्यादीप्यसेज्ञानदृष्ट्या।द्विशीर्षत्वाच्चतुरक्षोधियज्ञोद्वेशी
र्षइतिवागुत्तरत्र । योदत्तहव्यस्तेऽतिसौम्यायपीत्यैकर्तुर्मंत्रंसंभजसेहितस्य ॥ १३ ॥ ( त्वमग्नउरु ) महास्तो
त्रायवदतेस्पार्हमिष्टंरेक्णःसुखंपरमंतद्ददासि । आसमंताद्धारकस्यापिवायोःप्रज्ञानदःप्रोच्यसेत्वंपिताच ।
प्रशास्सित्वंपरिपक्वाधिकारंप्रदेशकत्वादखिलंत्वंसुवेत्ता ॥ १४ ॥ ( त्वमग्नेप्रयत ) धृतंवर्मेवपरिपासिनित्यं
प्रयत्नाद्योदक्षिणादोमखेषु । स्वादुक्षद्माःसुखगेहोगृहेचस्योनंसुखंयःपरेषांकरोति । यावज्जीवंयजनेसुप्रति
ज्ञोभूत्वाचयोयजतेतस्यसैव । द्युप्राप्तिभावेद्युपमादेहएवक्षमेतिवावसतिर्ज्ञानमार्गे ॥ १५ ॥ ३४ ( इमां )
यामेभवच्छरणप्राप्तिरेषामर्षस्वतामल्पइतिक्षुधोमा । त्वत्प्राप्त्यर्थंदूरमगांचयत्तत्प्राप्यःपिताज्ञानदोदेवतानां ।
त्वंभ्रामकोमानुषाणामृषीणांकर्तातथाज्ञानदानेनदेव ॥ १६ ॥ ( मनुष्वत् ) यथामनुश्चांगिरावाययाति
गृहेप्राप्तस्त्वांतथामद्गृहंच । अभ्यायाह्यावहदेवसंघमासादयबर्हिषियक्षिचप्रियं । यष्टात्वमेवाखिलजीवगो
यत् ॥ १७ ॥ ( एतेनाग्ने ) स्पष्टत्वंचप्राप्नुहिवेदवाचा । शक्त्यायत्तेचकृमज्ञानतोवावस्योभद्रंप्रणयास्मान्सु
मत्या । भोगेतयासंसृजनित्यमेवयस्माच्छक्त्याचकृमत्वत्सुकर्म ॥ १८ ॥ ३५ ॥ १२ ॥ ( इंद्रस्यनु ) इंद्रस्यवा ॥३४२॥

वासुदेवस्यवीर्याण्याचक्षेहंयानिमुख्यानिचक्रे। अहिंदैत्यंसंशयंवाजघानजलानुसारेणचखानमार्गं।ततर्दवि
घ्नान्कर्मणांवानुसाराद्वहनात्पक्षावक्षणादुर्वचांसि।जीवानांचेद्वक्षणाजन्मपर्ववतांबिभेदैवसुयुक्तिभिस्ताः।।१
(अहन्) त्वष्टात्वेतज्ज्ञानवज्रंविरिंचस्ततक्षैतद्विषयंत्विडात्मा । स्वयंवज्रंनिशितंशब्दजंवाशिशुवत्सागाव
इवैतदीरिताः । अंजःसमुद्रंजग्मुरापःक्रियावासमुद्रिक्तंदेवमेनंव्रजंति ।। २ ।। (वृषायमाणः) वव्रेसोमंतृषि
तोयद्वदेववृषापिबत्सवनेषुत्रिषुस्म । सवनानांकद्रुकत्वंद्रुतंयत्कमत्रसोमोध्यानयोगेमनोवा । सायंकरंलयकृ
ज्ज्ञानमेवसमाददेसंशयमीशवद्वा ।। ३ ।। (यदिंद्र) अहन्नेनंप्रथमंमायिनांचव्यनाशयोव्याजरूपाश्चमायाः।
ततःसूर्यंद्युदिनादेश्चकर्तात्वमेवतावद्वलतोनशत्रुं ।लभसेमायावादिनांवाथमायाव्यनाशयस्तैःस्वजनैस्तज्जये
न।।४।। (अहन्वृत्रं) अहन्वृत्रंव्यंसमतोधिकंचतमोमिथ्याप्रत्ययौव्यंसनाद्वा। स्कंधास्तरोर्यद्वदथोविवृक्णाअ
हिश्चवज्रेणकुलस्यशंकृतेः। विद्यानाम्नाकुलिशोबुद्धिरेवपृथिव्याख्यासंशयस्तद्गतोयत्। अतःपृथिव्याउपपृक्
।। ५ ।। ३६ ।। (अयोद्धेव) यस्ययोद्धानायोद्धासौतद्वदेवेंद्रशत्रुः । दर्पोद्रिक्तोह्याह्वयामासशक्रंविष्णुंवाऽ
ज्ञानंवीरतमंरिपूणां। महोच्चानांबाधकंदार्ढ्यहेतोर्ऋजीषाख्यंनास्यविष्णोर्वधानां । संप्राप्तिमज्ञानमथापिवृत्रः

शक्रस्यातारीत्संपिपिषेप्रजाश्च।रुजायुक्तामानुषीर्वासृतिस्थाइंद्रःशत्रुर्यस्यसहींद्रशत्रुः।पुंसोःपूर्वस्मिन्स्वरितां
तेसमासोबहुव्रीहिर्हीतिसूत्रंपुराणं॥६॥ (अपात्) संछिन्नपाद्बाहुरपींद्रमेवयुयोधवज्रंव्यसृजत्सतस्य। गिरेः
सानुप्रतिमेकंठदेशेतर्कागमाभ्यांरहितंतमोवा। संयुध्यमानंमानवज्रेणविष्णुर्जघानवध्रिर्वधयोग्योथनीचः।
ईशस्यशत्रुर्भवितुंसइच्छन्व्यस्तोशयद्बहुधेशेनतेन ॥ ७ ॥ (नदन्न) अपांरोद्धारममुयास्वमात्रासहैवशक्रे
णहतंशयानं। भिन्नंनदंयद्ददतीत्यचापोमनःपूर्वंचारुहाणाःप्रयांति। वृत्रोयाःपूर्वस्वमहिम्नापरीत्यपुरातिष्ठत्त
त्सुतोहिश्चतासां। पत्सुतश्शीःपादतोनंतरंतुशेताभवत्तद्ददेवाभिरुंधन्।तमःपुत्रःसंशयोवाभिरुंधन्शुभान्या
स्तेनिहतःसोपितेन॥ ८ ॥ ( नीचावयाः ) नीचस्थानेबंधनंयापिचापांकरोतिदानुर्वृत्रमातादनुःसा ।
वृत्रोह्यभूद्दनुजःकश्यपाच्चपापात्मासौवैष्णवस्त्वष्टृजातः। वृत्रःपुत्रोस्याइतिसावृत्रपुत्रावधंतस्याअहरत्पूर्वमिं
द्रः । प्रकृतिर्वावृत्रमातातमोहितस्याअभूत्तांजघानेशितावा। प्रातिस्विकीप्रकृतिर्यत्तमश्चदोषाश्चान्येपुंस्त्व
तोयुक्तमेतत् । सुतावनार्थमुपरिस्थाबभूवसुतस्यमातातांनिहत्यामुमेव ।जघानेंद्रःकारणस्यापिनाशात्का ॥३४३॥
र्योत्थानंवारयामासविष्णुः । स्यादेवपूर्वंकार्यनाशोह्यथापिनिःशेषनाशःकारणस्यैवनाशात्। एवंभक्तानानु

जग्राहदेवोनारायणःपारयन्संसृतेश्च । उत्तरत्वंप्रकृतेःशक्तितःस्यात् ॥९॥ ( अतिष्ठंतीना ) अनंतत्वान्नै वतिष्ठंतिकाष्ठाः । अतस्तासांनगृहंकिंचिदस्तिनिण्यंसुखेनैवचरंतिचापः । दीर्घंतमोवृत्रसंज्ञंतमोवादीर्घमं धंप्रापवृत्रःसएव ॥ १० ॥ ३७ ॥ ( दासपत्नीः ) दासस्यविष्णोर्वरुणस्यपत्न्योनिरुद्धाआसन्नहिनायद्दे व । गावोबलेनेंद्रयज्ञेसुकृत्तावृत्रंहत्वातमहिंचाशुशक्रः । उद्घाटयामासबिलंतदापांशुभद्वारंभगवान्वातमो घ्नन् ॥ ११ ॥ ( अश्व्योवारः ) सृकेयुद्धेप्रत्यहंस्त्वांयदिस्मदेवःप्रधानोपितदश्ववारः। वालीवत्वंननुदेवस्तदा नींप्रतिहंतातेनैवकश्चिच्छितस्मात् । अजयोबलाद्वाअजयोहिरण्यंसोमंगंतुममुचःसप्तसिंधून् ॥ १२॥ (ना स्मै ) अशनिंयांविद्युतंयांमिहंचनाम्नाहेतिंवेद्युपमांसुतीक्ष्णां । अशनिभेदंह्रादुनिनामधेयंत्वामुद्दिश्यैवाकि रत्सोहिरुग्रः । त्वांप्रत्येतन्नैवसिद्धिंचकारपश्चात्कालेत्वजयस्त्वंतमेव ॥ १३ ॥ ( अहेर्यातारं ) अहेर्योद्धारं कमपश्यइंद्रयज्जघ्नुषस्तेपिभयंजगाम । ज्ञानानिमिथ्याबोधतोस्मन्मनश्चशब्दादिकादमुचःसप्तसिंधून् । मह त्तत्वादीन्विपरीतामतिस्तुविद्युच्छब्दाःस्तन्यतुर्वक्तृशक्तिः । मिहेत्युक्ताह्रादुनिर्हुंकृतिश्चप्रतिवक्तॄणामनुकूले रमेशे । नसाधयंतिस्मतमस्समुत्थाजयत्येनंसंशयंवासुदेवः। स्वभक्तार्थेतद्धृदिस्थःकएवत्वदन्योहेरभिगंता

भवेत । तवैवयस्मात्संशयंजग्मुषस्तुत्वदीयानांभयमंजोव्यपैति । शतमेकोनमतरस्वंनदीनामहिंदैत्यंग्नन्यथा
काशदेशात् । भीतःश्येनोह्यतिगच्छेत्तथैवनानानदीवारकत्वात्तुतस्य । ईशोदेवानांतावतांतावतीश्चसृत्या
पगास्तारयामासयद्वत् । भीतःश्येनस्तरतीत्थंतथैषांकृत्वोपमांतारयामासदेवः । स्वातंत्र्येभेदकरणेचोक्तए
वव्यत्यासइत्यनवद्यंतदेतत् । वस्वादित्यामरुतश्चाश्विनौचबृहस्पतिःशेषविपानिरुद्धाः । ब्रह्माब्रह्माणऋभवश्चै
वरुद्राऊनंशतंदेवतासंहितोक्तं ॥१४॥ ( इंद्रोयातः ) सएवेंद्रोभगवांस्तत्प्रसादात्प्राप्तोभक्तेःपर्यवसानगंतुः ।
मुक्तस्यराजापिशमस्यमुक्तेर्ज्ञानंश्रृंगंतद्वतश्चैवनित्यं । सएवराजाक्षयतिप्रजानांभूतान्यराणीवचपर्यभूत्सः ।
॥ १५ ॥ ३८ ॥ १३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमदृग्भाष्येद्वितीयोऽध्यायः ॥२॥
श्रीमद्धनुमद्भीमममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॥ ॐ ॥ ( एतायाम ) येसखा
यस्त्वरिताएतदेवाउपायामपशुवत्तद्वशस्थाः । गव्यंतउक्ताअतिनिश्चितेर्थेभूतशब्दश्चेत्याहसूत्रंपरेशः । प्रकृष्ट
ज्ञानंवर्धयत्येवसुष्टुसनोभेद्योनाम्नृणःक्वापितस्य । वित्तानितस्माद्वेदवाक्योत्थमेवकेतंज्ञानंपरमावर्जतेनः । द
दाति ॥१॥ ( उपेत् ) उपैवेशमहंपतामियथाश्येनोवसतिंपूर्वभुक्तां । इंद्रंनमस्यन्ननुकूलगीर्भिरेवयःस्तोतृभ्योह

व्यएवास्तिकाले ॥२॥(निसर्वसेनः) अशेषसेनापतिरेषशत्रूनशेषतोहंतुमथोतमांसि । बध्नातितूणान्निजसज्ज नान्वासंयोजयत्यात्मनिमानबाणान् । अयोंगम्योधीश्वरोगामतीर्वासंकालयत्येवचयस्यवष्टि । भक्तस्यतत्त्वं ददमानस्यभूरिभद्रंमाभूरसुरस्त्वंकदाचित् । अस्मदर्थेहिंसकत्वेननित्यप्रवृद्ध ॥३॥ (वधीर्हि) वज्रेणघनेनद स्युं । ज्ञानेनवाज्ञानगणंधनाढ्यमयज्युंचाप्येकएवांतरेच । चरंश्छाकैःशक्तिभिःसर्वदेवनरादिलोकंयमयञ्जघं थ । अधिकृत्यत्वांधनुमत्यंतपुष्टंविष्वग्जग्मुरयजंतःसदैव । मृतिंप्रापुर्दुःखबाहुल्यरूपांसनकालाभेयोग्यरू पाअपिस्म ॥४॥ (पराचित्) अयज्वानोन्येवक्ष्यमाणास्तुयेतेसंत्यासुरायज्वभिःस्पर्धमानाः । शिरांस्यपिस्वा निसंतत्यजुस्तेसद्भिःस्पर्धामात्रसंपूरितार्थाः । तानत्रतान्स्वर्गतःखात्पृथिव्यानिरधमस्त्वंस्थैर्यवानिंद्रियेशः ॥ ॥५॥१॥ (अयुयुत्सन्) यदानवग्वाऋषयोसुरेंद्रैरुपद्रुताःशरणंवासुदेवं । प्रापुस्तमोभिस्तामसैर्वाघसंघैःसंपी डिताअयुयुत्संस्तदातैः । सेनांचविष्णोर्निरयातयंस्तेवधायतेषांहरिभक्त्यादिकान्वा । गुणान्समर्थाइवयो धाःस्वशत्रुवधैकशीलाअपिनष्टाःप्लवद्भिः । गुणैर्विष्णोःस्वैर्गुणैर्वाप्रसादादीशस्यसंकालयंतोह्यगच्छन् ॥६॥ (त्वमेतान्) रक्षोगणान्भक्षयतोमुनींश्चसंपीडितान्रुदतश्चत्वयैव । अयोधयोरजसोंतेखुसत्त्वबृद्धिर्यदाजग

तःस्यात्तदैव। पुंदोषान्वागुणभक्षान्नृसत्त्ववृद्धौदिवोज्ञानतोवादहश्च। अज्ञानदस्युंस्तुवतःसंस्तुतिंचप्रावोरक्षः
॥७॥ (चक्राणासः) बंधनंयेजनानां। कुर्वंतिहेम्नामणिभिश्शोभमानादैत्यादयोदृढदोषाधनैर्वा। तेप्रेरयंतो
पिपरस्परेणनैवातरन्वासुदेवंकथंचित्। सहैवसूर्येणचदेवसंघांश्चरानज्ञातानदधाद्वासुदेवः। दैत्यानांवातम
सांवृत्तदृष्ट्यै ॥८॥ (परियत्) पर्यभुङ्क्थाःसहयद्रोदसीच। स्वमहिम्नाविश्वतःसम्यगेवतदभक्तान्निरधमोभक्त
संघैः ॥९॥ (नयेदिवः) येदस्यवोद्युपृथिव्योरशेषभोगेच्छवोधनदंचेश्वरंतं। जिगीषवःस्वीयमायाभिरेवनैवो
दापुर्द्वयमेतत्कदाचित्। युक्तंज्ञानंवज्रमेवायुधंवादस्यून्हंतुंकृतवान्देवदेवः। निजेनैवज्योतिषाभक्तहृद्गतमो
गूढान्यदहन्निश्चयेन। ज्ञानानिविष्णुर्यत्तज्ज्ञानमुग्रं ॥१०॥२॥ (अनुस्वधां) यस्यकर्माण्यक्षरन्सौख्यमेव। यो
वेदवाचांसृतिनावात्मकानांमध्येवर्धदयथाज्ञानरूपः। समीचीनज्ञानतोहंस्तमीशओजिष्ठेनहतिरूपेणसम्य
क्। मोक्षप्रकाशार्थमथापिनावातरणीयानांमध्यतोपांवृधंतं। अहिंवा ॥११॥ (न्याविध्यत्) इळिनोभूस्थि
ताःस्युस्तत्राविशन्नसुरोनामतस्य। इळीविशस्तस्यदृढानियानिबलादीनिन्यहनत्तानिदेवः। तमसोवाशृं
गिणंशोषकंचवृषरूपंदैत्यमहन्नथोवा। कामंयावच्छक्तितोविक्रमाद्वावेगेनवाशत्रुमथोपृतन्युं। जघंथवज्रेण

सुबोधतोवानशक्तिसामस्त्यमिहोदितंहरेः। अनंतशक्तिर्हिहरिःसदैवकुतएवशत्रुस्तदमुष्यकोपि। अतोयथा शक्त्यभियुध्यमानंशत्रुंजघंथेतिमहानिहार्थः॥१२॥ (अभिसिध्मः) ससर्वतःसिद्धियुतःसदैवजिगायजीवारि गणान्पुरश्च। संसाररूपाअभिनद्धृषेणप्राणेनतिग्मेनविरोधिनःप्रति। संयोजयामासवज्रेणवृत्रंज्ञानेनवाज्ञान ममुष्यहत्यै। मतिंचस्वामदिशत्स्वप्रजाभ्यःसशाशदानःसुसुखीसदैव॥ १३॥ (आवःकुत्सं) कुत्संदशद्युंचमु निंनृपंचयस्मिंस्थितःस्वात्मरूपंसुभक्त्या। अदर्शयस्तोषितोयःस्वतंत्रश्चाकन्नुक्तःकर्मयतःस्वतंत्रे। वृषरूपस्या स्यनृपस्ययुध्यतःशफच्युतोरेणुरुन्नक्षतद्यां। श्वेतावाणीवायुभार्यासुतोस्याःश्वैत्रेयोयंयुध्यतोह्युदस्थात्।वृषःश्वै त्रेयोधर्मएवाथकुत्सनामाध्यात्मेकुत्सितोत्सारणात्स्यात्। धर्मरेणुःस्वर्गमात्राभिगामीसाक्षाद्धर्मोमोक्षफलो पगःस्यात्॥१४॥ (आवश्शमं)शमात्मकंवृषभंधर्ममेवाप्यरक्षस्त्वंतुप्रियास्वप्यधीश। तुभ्याख्यास्यात्संततिर्दी र्घकालामुक्तिक्षेत्रविजयायैवधर्मं॥ श्वेतासुतंरमणाद्रेफउक्तस्तमरक्षस्त्वंत्वयियेतस्थिवांसः। ज्योतिश्चक्रुर्निज रूपंविमुक्त्याज्ञानान्यरीणामधराणिचाकरोः॥१५॥३॥१॥ (त्रिश्चित्) आरभ्यचाद्यैवदिवानिशायांतदंतरे चत्रिरपिस्मसर्वदा। अस्माकमेवभवतंयतोन्योवेत्तानतावित्युदितौनवेदसौ।गौणंतदन्यत्रहरौतुमुख्यतोव्या

पीतुमार्गौयुवयोश्चदानं। अशेषदेशेषुगतेरशेषदातृत्वतश्चैवयुवोर्हियंत्रं । वासोयंत्रंयद्ध्दयततःस्याद्धिम्या
हिनोतेस्तंतुविक्षेपणीहि। तद्बुद्धिप्रेरकाऽयततोवामायार्थसेनौभवतंमनीषिभिः। सहैवदेवैः॥१॥ (त्रयः) प
वयश्चायुधानिसोमस्यपानंचेतनत्वाद्विदुस्ते। वज्रःखड्गःशरइत्यायुधानित्रिवेणवःस्तंभनामानएव। दिवानि
शायांत्रिस्त्रिरेवानुयाथःकर्मारंभार्थलोकसिध्यर्थमंजः। चक्रंगदाशरइत्यायुधानिवेदास्त्रयोवासुदेवस्यचस्युः।
रथःस्वीयोज्ञानिनांवाशरीरंप्राणादयःस्तंभनान्यस्यचापि॥२॥ (समाने) वैषम्यहीनेसुखभाजनेह्निविमुक्ति
कालेखिलदोषनाशकौ। स्वभक्तानांशोधयंतंचयज्ञंत्रिरस्माकंयुद्धजिताइषश्च। सुखानिवामोक्षगतानिनोल
महोरात्रंक्षरतंसर्वदैव॥३॥( त्रिर्वर्तिः)यद्वर्तनंसर्वलोकेषुतच्चत्रिकालगंयुवयोरेवसर्वं। भक्तेजनेसुष्ठुरक्ष्येसुभ
क्तेत्रिधेवकालानुगतेसुशिक्षतं। सुखंवहेतंचयुवांतुनःसदापुष्टिंचनित्यांक्षरतंवर्णवच्च॥४॥(त्रिर्नोरयिं)वित्तंच
नित्यंदेवतातिंचनित्यंधियंचशुभ्रांनित्यमेवावतंनः। कीर्तिंसौभाग्यंरक्षतंनःसदैवकालत्रयेयुष्मदीयंरथंच। पु
त्रीसूर्यस्यारुहद्भक्तदेहेज्ञानोदयोवाभगवत्प्रसादात्॥५॥ (त्रिर्नोअश्विना) सर्वेषुकालेष्वपिभेषजानिनःसर्व
लोकप्रभवानिदत्तं। अद्भ्यःसुखायैवसुखंममैवस्वल्पस्ययुष्मत्पुत्रकस्याथदत्तं। पतीशुभस्याथसुतस्यशंयोर्मदी

यस्यैवावहतंसुखंवा ॥ ६ ॥ ४ ॥ ( त्रिर्नोअश्विनायजता ॥ ७ ॥ त्रिरश्विना ॥ ८ ॥ क ॥ ९ ॥ आनास त्यागच्छतं ॥१०॥ आनासत्यात्रिभिः ॥११॥ आनोअश्विना ॥ १२ ॥ ५ ॥ २ ॥ ह्वयाम्यग्निं ) ह्वयामिदेवान ग्निपूर्वानथोवाविष्णुंतैस्तैर्नामभीरातियस्मात् । रतित्वाद्वारतिदत्वात्सरात्री ॥ १ ॥ ( आकृष्णेन ) कृष्णंर जःशार्वरंहृत्तमोवा । देवान्नृजातानथवाविमुक्तानन्यान्मर्त्यान्सृतिगान्वालयेषु । निशासुवास्वात्मनिसंनिवे शयन्प्रस्वापयन्वारविगोजनार्दनः ॥२॥ ( यातिदेवः ) आयातिनित्यंचोच्चनीचैःप्रदेशैःशुभ्राश्वयुक्तेनरथेन याज्यः । शुभौचतौरमणीयौचशुभ्रौपुरोगाश्वौहरिदश्वोहिसूर्यः । परावतोदूरतः ॥३॥ ( अभीवृतं ) अभी वृतश्चरथोहिरण्यैस्तस्यशम्यायुगाणी । तमःप्रकाशौयदधीनौयतस्तौदधानइत्युच्यतेवासुदेवः । कृष्णंरजस्त विषीसत्त्वपूर्वागुणास्त्रयोव्युत्क्रमात् ॥४॥ ( विजनान् ) तत्तुरंगाः । श्यावाःश्यामत्वान्नीलपादोजगत्तेपश्यंति संधिःप्रउगंरथस्य । देवप्रियत्वाद्दैव्यनाम्नोहरेस्तुसमीपस्थंसर्वगत्वाज्जगद्धि ॥५॥ ( तिस्रोद्यावः ) तिस्रोद्यावो मात्रयंद्वावुपस्थौजडाजडेश्रीर्विराषाडधीश । विश्वस्यसाक्षाद्भगवान्नियंतायमोस्यसर्वंगदितंसदैव । जडाज डत्वान्नान्यसुक्तंपृथग्घिसर्वस्वाम्यंवक्तुमेवोदिताश्रीः । अन्योन्यसंबंधविवक्षयैवह्युपस्थत्वंमुक्तभूतानियानि ।

अशेषतस्तानिरथस्ययद्वदाणिंरथ्यंसंश्रितंसर्वदैव। एवंहरिंसंश्रितान्यब्जजेशपूर्वाण्यपीत्येषवेदार्थसारः। इह
ब्रवीत्वन्यथायोभिपश्येकुर्याद्वातद्योयथावच्चपश्येत्।शेषंज्ञानंसब्रवीत्वस्मदर्थेचकारयोविष्णुरेतत्सवानः॥६॥
॥६॥(विसुपर्णः) गंभीरवेगोभगवान्वासुपर्णःपरानंदादंतरिक्षाण्यपश्यत्। असौरतिःशुभनीतिश्चविष्णुरि
त्यपश्यद्दुर्लभत्वात्कएव।पश्यन्नवेरश्मिगणानपीहसर्वव्याप्तानपिविष्णोर्नरश्मीन्। लोकःपश्येदितिकुत्राततता
नेत्याक्षिप्यतेव्यक्तिमपेक्ष्यरश्मेः॥७॥(अष्टौ) ऊर्ध्वंमध्यमधरंचेतिधन्वत्रयंतमःसुखलीनंयतस्तत्।युक्तंभवे
त्तद्गतैःसर्वदैवद्दढश्लेषाद्योजनंस्यात्तमोहि।अष्टौदिशःप्रकृतेर्वापृथिव्यामहदाद्याःसिंधवस्तान्यपश्यत्। हिर
ण्याक्षोनरसिंहात्मनासवार्याणियद्वरणीयंसुवित्तं॥८॥(हिरण्यपाणिः) चर्षणिभ्योयत्प्रजाभ्योविशिष्टोवि
चर्षणिःकेशवःसूर्यमेति। ऋणोतिसंपूरयति॥९॥ (हिरण्यहस्तः) स्ववान्सस्वतंत्रत्वात्स्वर्णपात्रंसुपूर्णं।
दधानोसौस्वर्णवर्णश्चतेनस्वर्णपाणिःस्वर्णहस्तश्चदेवः। पृथक्पृथक्पाणिपूर्वांगवित्त्यैस्वर्णवर्णःस्वर्णपाणिःसउ
क्तः। एतैर्लिंगैर्वेत्तिसूर्यंयतश्चसूर्यादन्यःसवितावासुदेवः।उक्तोगायत्र्याचारणैस्तत्रतत्रकप्यासपद्माक्षइति ॥२४७॥
ह्युदाख्यः॥१०॥(येते) येपंथानोदेवयानाअमुत्रसाध्यायेतेरणवोरागतोवा। रजोहानादथवातान्प्रदा

यरक्षाधिकान्ब्रूहिनोथोसमेभ्यः ॥११॥७॥३॥७॥ कण्वस्त्वध्यापयन्विष्णोरनुग्रहमथाप्नुवन्। इच्छंश्चज्ञानवि
ततिंदेवांस्तुष्टावभक्तितः। ऋक्शतेनावशिष्टंचजप्यस्यांतेतुकालतः। शृण्वंतुस्तोममित्यंतादद्दर्शैकाग्रमानसः
॥७॥ (प्रवः) बह्वाधेयत्वतःपुत्रंबहूनांवोहुताशनं। बहुज्ञेयत्वतोविष्णुंवेमहेहेप्रजाःसदा। देवज्ञानाद्वायजना
द्देवयत्यःसमीळते। यमन्येचजनास्संतः ॥१॥ (जनासः) सहसावायुनैधितं। धारयंतिजनास्तस्यकर्मकुर्मो
वयंचते। संत्यःसम्यक्त्वतोविष्णुर्वायोरपिविवृद्धिकृत्॥२॥ (प्रत्वा ॥ ३ ॥ देवासः) प्रततेःपुरातनत्वाद्वाप्रत्नः
॥ ४ ॥ (मंद्रः) मंद्रोमहामखः ॥ ५ ॥ ८ ॥ (त्वेइत्) देवान्सुवीर्याद्यजसि ॥ ६ ॥ (तंघ) तंहित्वामेवसर्वदा।
उपासतेनमस्यंतःसंतस्तीर्णास्तुसंसृतेः । त्रिधोद्यातितितिर्वांसस्तीर्णदुःखाइहैववा। त्वत्प्रसादेनविद्वांसःप्रा
प्यब्राह्मण्यमुत्तमं ॥ ७ ॥ (घ्नंतः) तमोघ्नंतोतरँल्लोकानपःकर्माणिचोत्तमाः। उरुब्रह्मक्षितित्वेनचक्रुस्तत्रैव
संस्थितेः। वृषासभगवान्विष्णुर्मुनौकण्वेभवत्स्थितः। कंदद्श्वस्वरूपश्चज्ञानस्यान्वेषणेकृते। ततःकण्वान्नि
स्सरंतिशुद्धावेदानुगागिरः। द्युतिमत्त्वात्सतुद्युम्नी ॥ ८ ॥ (संसीदस्व) देवेषुज्ञानवत्तमः। सत्वंशोचस्वदी
प्यस्वधूमःसंसारधूत्कृतेः। अरुषोरोषहीनत्वाद्धूमश्चेच्छुभगंधनात् ॥ ९ ॥ (यंत्वादेवासः ॥ १० ॥ ९ ॥ य

मग्निं ) यंसुतोमेसमीधेग्निंमेध्यातिथिऋतादधि । उक्त्वासत्यांवेदवाचंदेयान्यन्नानितस्यहि । तंप्रतीमाऋचःस
र्वाःप्रकाशाद्वर्धयामतं । इंधनंतुहरेर्नान्यत्क्वचिदस्तिप्रकाशनात् ॥११॥ ( रायः ) वित्तानिपूरयास्माकंदेवेष्व
प्याप्यमस्तिते । यज्ञभागादिपूज्यत्वात्स्वधावःसुखवर्धकः । श्रुत्यवाजोयज्ञभागोराजाभवसितस्यहि ॥ १२ ॥
( ऊर्ध्वः ) अस्मद्रक्षाकृतेनित्यंसूद्यतोभवविष्णुवत् । विष्णुश्चेत्स्वात्मदृष्टांतोनोन्नदातातथोद्यमी । यत्स्तुवद्भिर्द्वि
जैर्युक्ताःस्वैहैस्त्वांविह्वयामहे ॥१३॥ ( ऊर्ध्वोनः ) ज्ञानेनपाहिनितरामुद्यम्युच्चगुणोपिनः । असुराअत्रयःप्रोक्ता
मार्गत्रयविवर्जिताः । स्वर्गापवर्गमानुष्यंत्यक्त्वायांतितमोहिते । अदंतीत्यथरक्षांसिवात्रयोधिकभक्षणात् । भो
गायजीवनायापिस्वलोकचरणायच । उत्तमान्कुरुनोनित्यंदोहनानिचलंभय । देवेभ्योखिलकाम्यानिसदा
नोतिमहांतिच ॥ १४ ॥ ( पाहि ) अरंछिद्रंप्रापयतीत्यरावापापपूरुषः । धूर्तकेस्तस्यनोरक्षनश्यतोस्मद्व
धायच । यवीयस्सुस्थितत्वेनयविष्ठ्योहरिरुच्यते । ब्रह्माद्यपेक्षयानित्यंयविष्ठतमएवयत् । अग्निर्यविष्ठ्यइत्यु
क्तोयदाधिक्यार्थतोधिकं ॥ १५ ॥ १० ॥ ( घनेव ) वायुर्मेघानिवजहिसर्वतःपापपूरुषान् । अस्मद्द्रोहीचय
स्तंचतापैनैवात्तियत्ततः । तपुर्जंभःशिशीतेयस्तीक्ष्णोभवतिसर्वदा । नेशोभवतुसोस्माकंदुरात्मापापपूरुषः

॥१६॥ ( अग्निर्वन्ने ) सुवीर्यंसौभगंचैवममेशःसमभाजयत् । मेध्यातिथिंसुतंचैवमित्राणिचररक्षमे । उपस्तुतंचै वमुनिंसातौलाभेररक्षह ॥ १७ ॥ ( अग्निना ) तुर्वशादींस्तथाराज्ञोवयंतेनहवामहे । तुरोपियद्वशोविष्णुःस चतुर्वशनामवान् । यदस्तिततउच्चत्वाद्यदुरुग्रोसुरान्प्रति । तमेवतत्प्रसादेनह्वयामोनयदेवसः । नववास्त्वादि कात्राज्ञोबलंदस्युविनिग्रहे ॥१८॥( नित्वां )मनुष्यःसन्नहंत्वांतुज्योतिर्मुक्तजनायच । निदधेहृदिसत्त्वंचदीप्य सेमयिसर्वदा । ब्रह्मजोग्निर्ऋतादेदवाचोभिव्यज्यतेहरिः । उक्षितःस्वगुणैःसर्वैर्युक्तः ॥ १९ ॥ (त्वेषासः)अमेया श्चशक्तयः। त्वेषाइत्युदितास्तस्यहरेरश्मयएवच । भीमानप्रतिगंतुंचशक्याराक्षसपक्षिणः । यातवोजंगमास्ते षांहिंसनावांस्तुराक्षसः । यातुमावानितिप्रोक्तोयातनानुभवात्कचित् । यातुरित्येवचप्रोक्तःसंतंप्रत्यनुकूलतः। स्थितास्ताःशक्तयोविष्णोः॥२०॥११॥४॥(क्रीळंवः)क्रीडाशीलंचमारुतं । शर्धःसुखबलाढ्यंवाप्यनर्वाणमनिं द्रियं । नवायोरिंद्रियाणांहिदेवाःसंत्यभिमानिनः। अतोनिंद्रियतातस्यरथेदेहेशुभश्वसः। कण्वास्तंगायताभी क्ष्णंविष्णुंवातादृशैर्गुणैः ॥१॥ (ये ) पृषत्योवाहनान्येषामन्यदायुधमुच्यते । स्वप्रकाशोथवाविष्णुस्तल्लिंगैर्व्य ज्यतेसह । तत्तद्देवगतस्यापिविष्णोर्लिंगंचतद्भवेत् ॥२॥ ( इहेव ) यत्तेवदंतिवचनंमेघनादात्मकंहितत् । इहा

पिश्रूयतइववर्णाव्यक्तेरिवेतिच। हस्तेष्वेषांकशाःसंतिचित्रंमार्गेधिगम्यते। रेण्वादिसर्ववस्तूनांगमनान्मार्ग
चित्रता। विष्णोस्सर्वंजगच्चित्रंमार्गेसंप्रेर्यतेमुना ॥ ३ ॥ ( प्रवः ) शोधकायप्रधानायवोबलायचवायवे। शु
द्धायवासुप्रकाशज्ञानायातिबलायच । गायतब्रह्मदेवत्तंदेवेषुततमीश्वरं। प्रीतिर्वायोर्विष्णुगानाद्वेदाख्यंब्र
ह्मविष्णवे। देवैरधीयमानत्वाद्देवत्तंब्रह्मवैष्णवं ॥ ४ ॥ ( प्रशंसा ) अहंतव्यत्वतस्त्वघ्न्यंवायुंवृषभरूपिणं। क्री
डंतंवेदरूपासुगोषुतंस्तुहिमारुतं। माभिर्वेदैःस्तुतत्वेनमारुतोविष्णुरेववा। भक्षणार्थंरसस्यासौववृधेमरुतां
पिता ॥५॥१२॥ ( कोवः ) आसमंतादुत्तमःकःप्रधानोवायुरेववः। विष्णोराक्षेपएवस्यात्कोनामास्तिपरस्त्व
ति। त्वत्पर्यंतंचवर्षिष्ठःकोभवेदितिवाभवेत् ।आधूतयोदिवोग्मश्चभूम्याइत्यन्वयोभवेत्। तस्मादंतंप्रतीवेत
ज्जगत्संधूनुथाखिलं ॥ ६ ॥ ( निवः ) नीचैर्धृतोमानुषोवोमार्गायोग्रायमन्यवे। नपूर्यतेचकोपायस्वल्पत्वा
न्मानुषःक्वचित्। बहुवर्षयुतोत्युच्चगिरिर्मार्गेहिवोत्यजत्। मूलं ॥ ७ ॥ ( येषां ) येषांतथाज्मेषुमार्गेष्वति
भियाधरा। कंपतेजीर्णराजेव ॥८॥ ( स्थिरंहि ) स्थिरंवोजननंयतः। जातावायोर्दिवियोमातुःप्राप्तानि ॥३४९॥
रेतवे। निर्गंतुंतत्क्षणेनैवसर्वलोकाटनायहि। यौवनंतेयुवानोहिनिसर्गान्मातुराजनेः।मातुरेवप्रसादेनसम्य

क्तद्धिविधंबलं। प्रज्ञाबाहुबलंयस्मात्तस्मात् ॥ ९॥ (उदु) दिशउदापिरे । तेगिरःसूनवोदेव्यावाश्रावचनशी
लिनः । अभिजन्मानुसारेणगुणान्यातुमुदापिरे ॥ १० ॥ १३ ॥ ( त्यंचित् ) पद्भ्यांभूमिरितिश्रुत्यासुताविष्णोर्वसुंधरा।तज्जत्वात्पर्वताविष्णोर्नप्सारःसेचनाद्धिमिद्र । हरिस्तमपिमेवादिंमरुतश्च्यावयंतिहि। अमृध्रमप्र
धृष्यत्वात् ॥ ११ ॥ ( मरुतः) बलंयदपिवोखिलं । जनांश्च्यावयितुंस्थानाच्छक्ताःसम्यग्गिरीनपि ॥ १२ ॥
( यद्ध ) कुर्वंतिशास्त्रसंवादंमार्गेश्रृण्वंतिकेचन । तेषांमध्येहिमरुतां ॥ १३ ॥ ( प्रयात ) शीभंक्षिप्रंप्रया
तनः । मदंकुरुततत्रैवदोहनान्यत्रसंतिहि ॥ १४ ॥ ( अस्ति ) सर्वमायुर्जीवसेस्तिप्रसादान्मरुतांहिनः ॥
॥ १५ ॥१४ ॥ ५ ॥ ( कद्ध ) कदानयोर्हस्तयोर्देवाधिध्वेप्रियतातवत् । कदापियत्प्रियस्तातःक्वप्रियइती
रितः । स्तृतंबर्हिर्यद्विषयेतेप्रोक्तावृक्तबर्हिषः ॥ १ ॥ (क्वनूनं) दिवःपृथिव्याश्चेदानींक्वगच्छथचाकिंफलं । न
गच्छथक्वाप्येतज्ज्ञातव्यंतत्प्रसादतः। आह्वयंतिक्वागावोयथैवयवसार्थिनः। फलार्थिनःस्तुवंतोवःक्वाह्वयंति
तथैवच ॥ २ ॥ ( क्वः ) स्तुत्यानिवःसुखानिचकथंज्ञेयानिनःसदा । इत्यभिप्रायतःप्रश्नःकस्मिन्नोज्ञापक
स्विति । सुवितानिसुभद्राणिसौभगंलक्षणंपरं ॥ ३ ॥ ( यत् ) पृश्निर्वेदःप्रश्नयोग्यःपृश्निमाताहरिस्ततः ।

ज्ञेयस्तस्यापिविज्ञातामरुतश्चेत्सुतागिरः । मानुषायदियूयंवःस्तोतादेवोभवेदपि ॥ ४ ॥ ( मावः ) नस्या
दसेव्यःस्तोतात्रयथायवसगोचरे । गोप्राप्येतुमृगोसेव्योयममार्गंनचव्रजेत्। याच्आरीतिविशेषोयंनिंदास्तुत्ये
कदेशयुक् ॥ ५ ॥ १५ ॥ ( मोषुणः ) मावधीन्नःक्वचिन्मृत्युःपरतःपरतोपिच । दुर्हणादुःखदाहंत्रीयातुसा
तृष्णयासह ॥ ६ ॥ ( सत्यं ) अप्रमेयायथासत्यंधन्वन्नपिहिसेचनं । रुजांविद्रावकस्यैववायोःपुत्राहिरुद्रि
याः । विनाप्यचेतनंवातंवृष्टिंकुर्वंतिहीच्छया ॥ ७ ॥ ( वाश्रेव ) एषांसकाशाद्वृष्टिश्चविद्युद्भूमिंप्रकाशयेत् ।
गौर्वत्समिवभूम्यांच ॥ ८ ॥ ( दिवाचित् ) लोकंसिंचंतिमातृवत् ॥ ९ ॥ ( अध ) मानुषादित्वमन्यच्च
बिभेदेषांस्वनादपि । गृहमानिनोगृहाद्यंवाचचालैषांस्वनादपि ॥ १० ॥ १६ ॥ ( मरुतः ) अखिन्नैर्गमनै
श्चैवदृढस्वीयैश्चपाणिभिः । अनुयातनदीश्चित्राः ॥ ११ ॥ ( स्थिरावः ) स्थिरास्संतिरथादयः ॥ १२ ॥
( अच्छ ) ब्रह्मणश्चपतिंविष्णुंयथावद्याक्षयागिरा । जरायैसंतिस्तुत्वेनतृतीयाभावरूपिणी । सर्वाविभक्त
यश्चेत्थंभाववाचिन्यएवच । महाव्याकरणेसूत्रमितिसंस्तुतिरूपतः । वदविष्णुंस्वप्रकाशमभिवत्सूर्यवत्तथा । ॥ ३५० ॥
आहचात्मानमेवात्रदार्ढ्येस्वप्रतियोगिता । इतिसूत्रात् ॥ १३ ॥ ( मिमीहि ) कीर्तिमस्यविष्णोःकुरुमुखे

सदा । विस्तारयतिपर्जन्योयद्वद्वृष्टिंतथैवच । विस्तृणीहितथेशस्यतथाकीर्तिंजगत्यपि ॥ १४ ॥ (वंदस्व)
पनस्युंज्ञानशीलंचविज्ञेयंगणमर्किणं । अभवन्ज्ञापकावृद्धाअस्माकंतदनुग्रहात् ॥ १५ ॥ १७ ॥ ६ ॥
(प्रयत्) परावतोहरेःस्थानान्मानंशोचिरिवास्यथ । सूर्यादयोयथाशोचिर्दूरादस्यंतिजंतुषु । एवंज्ञानंसंप्रदा
यान्मरुतोविष्णुरेववा । इत्थंयथासर्वदृश्यंतत्तथाभवतांकृतं । एवंयत्रकवाज्ञानाद्बलाद्वागच्छथक्वचित् । स्वतं
त्रत्वात्परापेक्षानहिवःक्वचिदिष्यते । किंचिद्वाथबलात्किंचिद्धनुथस्वबलाद्धितत् ॥ १ ॥ (स्थिरावः) शत्रू
णामपनोदायसंतिवस्त्विहहेतयः । स्तंभनायचशत्रूणांसुदृढान्येवताःसदा । स्थिरत्वंदीर्घकालत्वंवीळुत्वंदृढ
तातथा । युष्माकंतविषीतेजोबलमस्त्युत्तमंसदा । मायिनोनहिमर्त्यस्यबलंतेजोथवोत्तमं ॥ २ ॥ (परा) स्थि
रंचाज्ञानपापादितद्धत्तायपराहथ । गुरूनपिनरान्नित्यंगुणैर्वर्तयथांजसा । पर्वतानांपृथिव्याश्चदिशोनित्यंवि
याथन । वनिनश्चतरून्सम्यग्भजनीयान्सुरान्हरिः ॥ ३ ॥ (नहिवः) भूमौदिविचवःशत्रुःक्वचिन्नैवहिलभ्य
ते । रिशादसःखुसुखिनःसुखेनशमदंतियत् । बलंतेजोपिवोह्यस्तिव्याप्तानित्यतयायुजा । अद्याप्याधर्षणायै
वनिखिलाशुभसंततेः ॥ ४ ॥ (प्रवेपयंति) प्रवेपयंतिपर्वतान्विविंचंतिवनस्पतीन् । जनिपर्ववतोजीवा

 न्संप्रेरयतिकेशवः । भजनीपतीन्ब्रह्मपूर्वांश्चफलदानतः । तारतम्येनसम्यक्चविवेचयतिसर्वदा । सर्वप्र 
 जास्वतिष्ठंतप्राप्तास्ताभिस्सहैवच । मत्ताइवप्रेरयंतिशुभाशुभकृतोनरान् ॥ ५ ॥ १८ ॥ ( उपो ) अयुङ्
ध्वंपृषतीश्चैवरोहितंपृष्ठतोरथे । वोयामंप्रतिदाव्यायशेषमश्रेत्पुनर्धरा । भीतिमापुर्मानुषाश्च ॥ ६ ॥ ( आ
वः ) क्षिप्रंवःप्राप्तयेसुखं । रक्षांवृणीमहेयुष्मद्दंताद्यापिचनोवसा । भीतियुक्तायकण्वायमह्यं ॥ ७ ॥ ( युष्मे
षितः ) युष्माभिरेवच । प्रेरितोथनियंतृत्वाद्युष्माकंमानुषेणवा । बाह्यदृष्ट्यात्वभूतीर्नोयइच्छतितमोजसा ।
बलेनचद्रावयतयुष्मदीयोतिभिस्तथा ॥ ८ ॥ ( असामि ॥ ९ ॥ असाम्योजः ) ओजोसमंबिभृथचमखे
ज्याःसममुत्तमं । सुदानशीलाःकण्वायदत्तासममभीप्सितं । असमैर्नोप्यभिप्रायैर्गतवृष्टिंनविद्युतः ॥ १० ॥
॥ १९ ॥ ७ ॥ ( उत्तिष्ठ ) देवयंतःपूजयंतःस्तुवंतोतिकृताशनः । प्राशूः ॥ १ ॥ ( त्वामित् ) वायोःसुते
त्येवसहसस्पुत्रइत्यथ । तद्यंग्यत्वाद्धरिःप्रोक्तःशक्रस्तत्सुतएवच । युद्धंहितधनंप्रोक्तंनिहितंधनमेववा । स्व
श्व्यंतुस्विंद्रियफलमाचकेऽपश्यदित्यपि ॥ २ ॥ ( प्रैतु ) पतिस्तुब्रह्मणोविष्णुर्वागीशत्वात्समीरणः । अग्रतो 
यात्वसावस्मत्कार्येष्वेवंसरस्वती । सूनृतावैष्णवीवाग्वायज्ञंवीरंनरंप्रति । नयंतुदेवाःसर्वेपियत्पंचजनवर्धनः ।

पंक्तिराधाहरिस्तेनवीरोनर्यस्सएवच । देवगंधर्वनृपितृदैत्याःपंचजनाभिधाः ॥ ३ ॥ ( योवाघते ) वाघते स्तुवतेविष्णुर्ददातिसूनरंवसु । सुष्ठुयेननरोभूयात्सूनरंज्ञानमुच्यते । सधत्तेचाक्षयांकीर्तिमिळामन्नंयजामहे । सुवीर्यत्वात्सुवीरंतत्सुप्रतूर्तिःसुपेशकृत् । प्राणचेष्टानिमित्तत्वात्तदनेहइतीरितं ॥ ४ ॥ ( प्रनूनं ) सएवभगवान्विष्णुर्मंत्रंतद्विषयंवदेत् । उक्थमुत्थापकत्वेनसएवभगवान्हरिः । तन्मंत्रवाच्यादेवाश्च ॥ ५ ॥ २० ॥ ( तमित् ) यद्वाच्यादेवतास्तुताः । तमेवमंत्रंवोचेमज्ञानार्थंसुखकारणं । इमांवाचंस्वीकुरुतसकाशाद्वोखिलं शुभं । अश्ववानि ॥ ६ ॥ ( कोदेवयंतं ) अतिदौर्लभ्याद्देवभक्तंकआप्नुयात् । यजमानंवानुगच्छेत्कःसम्यक्स्तृतबर्हिषं । तत्रतत्रप्रस्थितोसौयजमानःसुखैःस्वयं । स्वेष्टस्थानेषुचांतर्वाविष्णुरंतर्गतोयतः । तद्दत्त्वेनक्षयंस्थानंप्राप्नोतिज्ञानतोयजन् ॥ ७ ॥ ( उपक्षत्रं ) उपपृक्तःक्षत्रियैःसआवेशेनजनार्दनः । हंतिशत्रूंश्चतैर्देवोभयेचस्वाश्रयंददौ । वर्ताभिगंतातरुताजेताचास्यनहिकश्चित् । युद्धंमहाधनंत्वर्भंप्रसिद्धंधनमेवहि ॥ ८ ॥ ॥ २१ ॥ ८ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंश्रीमदृग्भाष्यंसंपूर्णं ॥

The Credit of getting the Sarvamoola Books Scanned goes to Panditavareenya ityaadi birudankita Shreemajjaalihaala Shreenivaasaachaaryasya Vidyaa Suta, "Gomanjari" Udgrantha kartru, (Raghunatha suri virachita Manikya manjari granthasya Khandana Grantha) Veda Shaastra Puraanaartha Vishaarada, Panditavareenya Shree Dwarakaanaathaachaaryaru.
My heartful salute for him to provide me such a wonderful opportunity to work on this project.

Project Started on : 21 December 2009
Project Completed on : 20 March 2011

Scanned By : Aravindacharya Haranahalli, aravindbharadwajhs@gmail.com